**नौ त्रौ गः क्षमा ॥ २०० ॥**

ननतरगाः । घैरिति वर्तते । यथा—

[1]अयि जड यतिबन्धो किमङ्गशौचैः,
कचिदपि सुकृतं स्यान्मुधासि मूढः[1] ।
यदिह च परलोके च साधु तत्त्वं,
शृणु कुरु हृदयस्थां क्षमामजस्रम् ॥ २००.१ ॥

**मौ जौ गः श्रेयोमाला ॥ २०१ ॥**

घैरिति वर्तते । यथा—

[2]लक्ष्मीलीलागारं विनम्रपुरंदर-,
भ्राम्यद्भृङ्गश्रेणीकृतस्रस्तनध्वनि[3] ।
नेत्रानन्दं ताम्राङ्गुलीदलबन्धुरं,
श्रेयोमालां दद्याज्जिनेन्द्रपदाम्बुजम् ॥ २०१.१ ॥

**नौ तौ गः कुटिलगतिश्छैः ॥ २०२ ॥**

छैरिति सप्तभिर्यतिः । यथा—

[3]यदसरलतरभ्रूर्विभुग्नालका,
कुटिलगतिरतिप्रौढवाग्वक्रिमा[4] ।
तदियमघटि भोः कौतुकात् कामिनी,
नियतमनृजुना[5] केनचिद् वेधसा ॥ २०२.१ ॥

नर्तकीत्यन्ये ॥ २०२.१ ॥

**नौ म्रौ गः क्ष्मा[6] ॥ २०३ ॥**

ननमरगाः । छैरिति वर्तते । यथा—

[4]त्वदरिमृगदृशामावासप्रदानाद्,
भयमिव परमं राजन् धारयन्तः ।
प्रचलति भवतः सैन्ये दिग्जयार्थं,
प्रतिदिशमगमन्[7] कम्पं क्ष्माभृतोऽमी ॥ २०३.१ ॥

---

1) अयि जडेत्यत्र यतिबन्धो इति—साध्वाभासवचनः ब्रह्मबन्धुवत् । 2) लक्ष्मीलीलेत्यत्र नेत्रानन्दमिति—नेत्राणि आनन्दयति नेत्रानन्दम् । 3) यदसरलेत्यत्र विभुग्नालकेति—वक्रभ्रमरालका । कुटिलेति—वक्र । अनृजुनेति—वक्रेण विधिना । 4) त्वदरिमृगदृशामित्यत्र त्वदरिवनितागृहप्रदानादेव त्वत्सैन्ये प्रसरति सति अमी क्ष्माभृत- पर्वता- कम्पं दधुरिति भावः ।

---

1 गा A. 2 मूढ AC. 3 ध्वनि B 4 गतिरपि A. 5 नियतमघटि A. 6 क्ष्मा छै GH. 7 अगमत् N.

**य्मौ रौ गश्चन्द्रिणी चैः ॥ २०४ ॥**

यमररगाः। चैरिति षड्भिर्यतिः। यथा –

[1]धराभारं विभ्रल्लीलया बाहुदण्डे,
जयत्येष श्रीमानूर्जितः क्षोणिनाथः।
भुजंगीभिर्गीतैरुज्ज्वलैर्यस्य शोभिर्,
बभूव प्रोद्दामैश्चन्द्रिणी नागभूमिः ॥ २०४.१ ॥

**नौ र्यौ गश्चन्द्रिका ॥ २०५ ॥**

ननरयगाः। यथा –

[2]निखिलकुवलयप्रपञ्चितानन्दा,
परिणतशरकाण्डपाण्डुरच्छाया।
इह जगति चुलुक्यचन्द्र निस्तन्द्रा,
प्रसरति तव कीर्तिचन्द्रिका नित्यम् ॥ २०५.१ ॥

**ज्तौ स्जौ गो मञ्जुभाषिणी ॥ २०६ ॥**

जतसजगाः। यथा –

[3]नरेन्द्र रुष्टे त्वयि महीभुजां मतिर्,
नवे पृषवर्मणि न चित्रवर्मणि।
कटु क्वणन्ती लुठति शृङ्खला पद-,
द्वये न कान्तानुनयमञ्जुभाषिणी ॥ २०६.१ ॥

**न्सौ रौ गश्चन्द्रलेखा ॥ २०७ ॥**

नसररगाः। यथा –

सुभगसुखदं मोहजालं जनानां,
हृदयहरणं बन्धनं लोचनानाम्।
सुललितवपुः सा सखे पीयते ते,
[4]विरहतमसा चन्द्रलेखेव तन्वी ॥ २०७.१ ॥

**न्सौ जौ गो लयः ॥ २०८ ॥**

नसजजगाः। यथा –

त्वमसि शरणं प्रसीद जगत्पते,
वितर सुतरां मनेह समीहितम्।
चरणकमले जिनेश्वर तावके,
भवतु मनसश्चिर परमो लयः ॥ २०८.१ ॥

---

1) धराभारमित्यत्र चन्द्रिणी चन्द्रा अस्त्यस्या इति चन्द्रिणी। 2) निखिलकुवलयेत्यत्र कुवलयेति – पृथ्वीमण्डलं चन्द्रविकासिकमलं च। निस्तन्द्रेति – मोहहीना। 3) नरेन्द्र रुष्टे इत्यत्र पृषवर्मणीति – नूतनहरिणचर्मणि मतिरासीत्। प्रव्रज्याग्रहणेच्छेति भावः। चित्रवर्मणीति – अनुचितवर्मणादि। 4) विरहतमसेति – विरहराहुणा।

**न्सौ तौ गो विद्युन्मालिका ॥ २०९ ॥**

नसततगाः । यथा–

[1]घनतमसि नष्टान् द्रष्टुमत्र क्षणे,
निखिलपथिकान् संद्यारबुद्ध्या ध्रुवम् ।
यत परिगृहीताः प्रावृषा दीपिकाः,
स्फुरितरुचिविद्युन्मालिकाव्याजतः ॥ २०९.१ ॥

**स्जौ स्जौ गो नन्दिनी ॥ २१० ॥**

सजसजगाः । यथा–

वसुधाधिपत्यमिह देव नार्थये,
जिननाथ नापि पुरुहूतसंपदम् ।
वरदोऽसि चेन्ममं तदा सदा मतिर्,
भवताद् भवद्गुणगणाभिनन्दिनी ॥ २१०.१ ॥

कनकप्रभा, जया, सुमङ्गलीति च केचिदाहुः । मनोवतीति भरतः ॥ २१०.१ ॥

**न्जौ न्सौ गो मदललिता ॥ २११ ॥**

नजनसगाः । यथा–

कलितकलङ्कशितिसिचयसंपत्,
करदलितेद्धतिमिरयमुनाम्बुः ।
प्रथयति गौरवपुरमृतरश्मिर्,
मुशलधरस्य [2]समदललितानि ॥ २११.१ ॥

**स्जौ सौ गः कुटजम् ॥ २१२ ॥**

सजससगाः । यथा–

परमं प्रकर्षमधिरुह्य विदध्यात्
किमिव प्रवासविषमस्थितिभाजाम् ।
कुरुते यतः प्रथमतोऽपि [3]घनर्तुः
कुटजप्रसूनरजसा जगदन्धम् ॥ २१२.१ ॥

भ्रमर इत्यन्यः ॥ २१२.१ ॥

---

1) घनतमसीति – निबिडान्धकारे । पक्षे घनस्य मेघस्य दुर्दिनम् । क्षणे इति – पर्वोत्सवणकाले । ध्रुवमिति – शङ्के । यतेति – निन्द्रायाम् । व्याज इति – छलात् । 2) समदललितेति – विलासक्रीडितानि । 3) घनर्तुरिति – मेघागमः ।

---

१ अनेक्षणे N. २ स्युरिह रुचि N. ३ मम न तदा A. ४ मुसल॰ P. ५ प्रथमतो घनकालः A. ६ भ्र॰ अन्यः dropped in B.

**नौ त्सौ गो गौरी ॥ २१३ ॥**

ननतसगाः । यथा—

ननु भव कुसुमेषो निशितशरैस्[१]
तृणमसि यतिनोऽस्य प्रशमवृत्तेः ।
क्वचिदपि खलु तेऽन्ये मनसि येषां
निवसति [1]मृगनेत्रा कनकगौरी ॥ २१३.१ ॥

**त्भौ स्जौ गो लक्ष्मीः ॥ २१४ ॥**

तभसजगाः । यथा—

विद्वद्गणैरुचितमुदीर्यते सदा
सिद्धेशनन्दन पुरुषोत्तमो भवान् ।
यत्त्वां स्वयंवरविधिनाभ्युपेयुषी[२]
लक्ष्मीरियं [2]रणमकराकरोत्थिता ॥ २१४.१ ॥

**त्भौ जौ गो अभ्रकम् ॥ २१५ ॥**

तभजजगाः । यथा—

[3]अभ्यस्यतीव रसवादकलामयं
सान्ध्यैः क्षणोऽभिमतचन्द्रमहोदयः[३] ।
तारौषधिप्रकटनाभिरतः सखे
प्रोद्दीपयन् विविधवर्णमिहाभ्रकम् ॥ २१५.१ ॥

**म्तौ स्रौ गः कोडुम्भो[४] ङैः ॥ २१६ ॥**

मतसरगाः । ङैरिति पञ्चभिर्यतिः । यथा—

लक्ष्मीः[५] कान्ताभिर्विकचनेत्रोत्पलाभिस्
ताम्बूलं[६] पत्रैः [4]परिणतैर्यानवारैः ।
काव्यं कोडुम्भाभिर्नवच्छन्दसेदं[७]
चेतोहारित्वं भजति वैदग्ध्यभाजाम् ॥ २१६.१ ॥

---

1) मृगनेत्रेति—मृगस्य नेत्रे इव नेत्रे यस्याः सा मृगनेत्रा । 2) रणमकराकरोत्थितेति—संग्रामसमुद्रसमुत्थिता । 3) अभ्यस्यतीवेत्यत्र श्लेषोऽयम् । सान्ध्यारम्भः सुवर्णभाजनकलां शीलतीव । कथंभूतः चन्द्रस्य महानुदयो यत्र सः । पक्षे चन्द्रं सुवर्णम् । ताराः तारकाः, ओषधयस्तासां प्रकटनेऽभिरतः । पक्षे तारं रूप्यं ओषधिः । पुनः कथंभूतः अभ्रकं मेघं विविधवर्णं कुर्वन् । पक्षे स्वच्छतरमिति । 4) परिणतैरिति—पक्वैः ।

---

१ धन्व नृपमणि A; शशलक्ष्मणि N. २ नाभ्युपेयुषी A. ३ सान्ध्यक्षणो ABFP. ४ कोडुम्भो N; कोदुम्भो H; कोर्दुम्भो P; कोडुंभो ■. ५ लक्ष्मी का° A. ६ ताम्बूलार्थैः N. ७ कोर्दुमाभिः N. कोदुमाभिः P.

**स्यौ स्जौ गः सुदन्तम् ॥ २१७ ॥**

सयसजगाः । यथा—

त्रिदिवं व्रजद्भिर्दिविपत्पतेः[1] पुरः
सुभटैर्जवान्निर्दलिता इवार्गलाः ।
करवालघातैस्त्रुटितास्तदा समिद्-
वसुधासु दन्ताः करिणां चकाशिरे ॥ २१७.१ ॥

**नौ सौ गः कमलाक्षी ॥ २१८ ॥**

यथा—

[2]विरचितनिबिडतरोत्कलिकाभिः
कमिव नवमदङ्कुरं न विदध्युः ।
सपदि शरदि सरितः कलहंस-
प्रकटितगतिललिताः कमलाक्ष्यः ॥ २१८.१ ॥

**नौगौ त्वरितगतिः ॥ २१९ ॥**

नगणचतुष्टयं गुरुश्च । यथा—

[3]नृवर तव धनुरधिगततगुणं
ध्वनति च युधि भयवशतरला ।
कलयति च पिचुनिचयतुलनां
त्वरितगतिररिनृपतिपृतना ॥ २१९.१ ॥

**लघुगतिश्चपला वेल्लन्ये ॥ २१९.१ ॥ १३।२६ ॥**

**शचचयौ नौ सौ ल्गावपराजिता छैः ॥ २२० ॥**

ननरसलगाः । छैरिति सप्तभिर्यतिः । यथा—

[4]शशधरवदनं कुशेशयलोचनं
शुचिरुचिरुचिरं ललाटतटस्थितम् ।
विशदकरुणयाधिवासितसद्धृदयो
जिनमनुसरतां भवन्त्यपराजिताः ॥ २२०.१ ॥

---

1) दिविपत्पतेः पुर इति—इन्द्रनगरस्येति भावः । समिद्वसुधेति—संग्रामधरणिषु । 2) विरचिते-त्यत्र रणरणकैर्वीचिभिश्च । कलहंसैः पक्षे कलहंसनाद । कमलान्येवाक्षीणि यासां ताः । नदीविशेषणेन कमलाक्षी-पदेन स्त्रियोऽप्याकृष्टाः । 3) नृवर तवेति—चकारद्वयं ध्वननकलनयोस्तुल्यकालतायोतनार्थम् । पिचुशब्देन तूलम् । 4) शशधरवदनमित्यत्र भो भव्याः जिनं अनुसरतां पुंसां संपदोऽप्यपराजिता भवन्ति । कं चन्द्रवदनं कमलनयनम् । पु० कं ललाटेति—तदाज्ञाशिरसाङ्गीकरणात् करुणाभावितम् ।

---

१ गं A. २ चकाशिरे AP. ३ अधिगगुणं A. ४ वेल्लन्ते DFP. ५ स्थिति B.

**म्सौ म्भौ गावलोला ॥ २२१ ॥**

मसमभगगाः। छैरिति वर्तते। यथा—

आत्मारामपदैकव्यापाराभिरतानां,
संसाराब्धिरगाधस्तेषां गोष्पदमात्रम्।
अन्तस्तत्त्वसमाधेः प्राणायामनिरोधान्,
नासावंशनिषण्णा येषां दृष्टिरलोला ॥ २२१.१ ॥

**नौ भ्नौ ल्गौ प्रहरणकलिता ॥ २२२ ॥**

ननभनलगाः। छैरिति वर्तते। यथा—

[1]तव गुणनिकरैरपि दृढविपुलैर्,
अहितसमुदयः सपदि नियमितः।
नरपतितिलक त्वमिह भुजलतां,
प्रथयसि किमसिप्रहरणकलिताम् ॥ २२२.१ ॥

**नौ म्यौ ल्गौ करिमकरभुजा ॥ २२३ ॥**

ननमयलगाः। छैरिति वर्तते। यथा—

[2]रणभुवि नृपते निर्स्त्रिंशदण्डेन ते,
रिपुभटकरिस्त्रोन्माथिना जृम्भितम्।
जलनिधिजठरे पाठीनकूर्मावली-,
करिमकरभुजौर्वेणेव तेजस्विना ॥ २२३.१ ॥

**नौ तौ गौ वसन्तः ॥ २२४ ॥**

ननततगगाः। छैरिति वर्तते। यथा—

[3]सखि भवति भवच्छ्रीपगण्डूषपाद-,
प्रतिहतिभिरियं यत्प्रसूनप्रसूतिः।
कुरवकवकुलाशोकमुख्यद्रुमाणां,
तदिह ननु तवायत्तसंपद् वसन्तः ॥ २२४.१ ॥

नन्दीमुखीत्येके ॥ २२४.१ ॥

**म्रौ तौ गौ लक्ष्मीः ॥ २२५ ॥**

मरततगगाः। छैरिति वर्तते। यथा—

---

1) तव गुणैरत्र यदि त्वद्गुणैरेव वैरिसमूहो बद्धः तदा किं त्वं सखड्गां भुजलतां ख्यातिं प्रापयसि गुणैरेव कार्यसंपादकत्वात्। 2) रणभुवीत्यत्र करटिन् हस्तिन्। समुद्रमध्ये मत्स्यविशेषकच्छपश्रेणिगजमत्स्य-भुजा वडवानलेनेव। 3) सखि भवति इत्यत्र त्वदालिङ्गनसुखेन ताम्बूलचर्व्यादानात् पादप्रहाराद् प्रत्येकं कुरवकवकुलाशोकाः पुष्पादिभाजो भवन्ति।

---

१ गोः पद० B. २ नासावंश ABP. ३ त्रिमपि प्रह० A. [illegible] रिपुतट० A. ५ the word is dropped in B and P. ६ कुरबक P.
७ छन्दो०

"[1]मामद्वैतानुरागां मन्यसेऽसौ तृणाये-,
त्येवं दौर्भाग्यदुःखोन्मूलनं चिन्तयन्ती ।
मन्ये त्वत्खड्गधारां वद्रुवं कर्तुकामा,
कामं सिद्धेन्द्रसूनो[1] सेवते राजलक्ष्मीः ॥ २२५.१ ॥

**मो रौ सो ल्गौ जया ॥ २२६ ॥**

मररसलगाः । छैरिति वर्तते । यथा –

"[2]माघद्वन्धद्विपानां त्वसहशनाशनि-,
क्रीडाघातैः समन्ताद् विदारितसानवः ।
यस्योच्चैः सहविन्ध्योञ्जयन्तहिमालयाः,
शैलाः शंसन्ति संप्रत्यपीह दिशां जयान् ॥ २२६.१ ॥

**म्रम्यल्गा ज्योत्स्ना ॥ २२७ ॥**

मरमयलगाः । छैरिति वर्तते । यथा –

हप्यत्पावालकुक्षौ स्फुर्जद्गुहायां गिरेद्,
मूर्च्छत्कान्तारमध्ये भूपाल घोरं वमः ।
नागीनां किंनरीणां पौलिन्दवामभ्रुवां,
क्रीडागानेषु कीर्तिज्योत्स्नाऽधुना हन्ति ते ॥ २२७.१ ॥

**नम्रसल्गाः सिंहः ॥ २२८ ॥**

नमरसलगाः । छैरिति वर्तते । यथा –

समदनागेन्द्राणां कपोलविपाटने,
स किल सदोऽभिरम्[2] प्रियावदनाम्बुजम् ।
वदिति शैक्यं[3] चित्रं चरित्रमहाद्भुतं,
हरिणपोतैर्द्रष्टुं न सिंहविजृम्भितम् ॥ २२८.१ ॥

**ज्सौ त्नौ गौ राजरमणीयम् ॥ २२९ ॥**

जसतनगगाः । छैरिति वर्तते । यथा –

"[3]समुद्भूतधरित्रीतलः प्रसुदितार्यो[4],
विनम्रनरधाराधरपनुसुतवपादः ।

---

1 ) मामद्वैतेत्यत्र चिन्तयन्तीति – ध्यायन्ती । सिद्धेन्द्रसूनो हे कुमारपाल ! राजलक्ष्मीरिति – एतावता त्वत्खड्गे जयश्रीरिति भावः । 2 ) माघद्वन्धेत्यत्र नर्मार्नर्तनम् । सानवः पुंनपुंसकाः प्रस्थाः । शंसन्ति सूचयन्ति । 3 ) समुद्भूतधरित्रीत्यत्र दैत्याविराजत् रमन्तंसन्तं सोमेशं । कथम् । समुद्भूतेति स्थानं विशेषणम् । पु० भार्यो गौरी, भार्याः स्वयंः । धाराधरा मेघाः । पक्षे नरसिंहगताय । तेजसा वा अनुपताय पादाः पर्यन्तपर्वताः । त्रिपथगामिनि – स्वर्गमर्त्यपातालगामिनी गङ्गा च ।

---

१ सिद्धेन्द्रसूनो S. २ सम्भो० P. ३ शंक्यं B. ४ प्रसुदितार्यो A.

चुलुक्यनृप कीर्तिं दधत्रिपथगां त्वं,
विभासि खलु शैलाधिराजरमणीयः ॥ २२९.१ ॥

**म्तौ न्सौ गावसंबाधा ङैः ॥ २३० ॥**

मतनसगगाः। ङैरिति पञ्चभिर्यतिः। यथा—

[1]"नैतल्लक्ष्माङ्के किमुत कदुरसं वाधा-,
हेतुः संलीनं विषमिह सहजप्रीत्या।
तेनायं मूर्च्छां विरचयति सुधारश्मिः,
शङ्के निःशङ्कः सपदि विरहिलोकानाम्। २३०.१ ॥

**त्भौ जौ गौ वसन्ततिलका ॥ २३१ ॥**

भजजगगाः। यथा—

[2]"सत्कर्णिकारचितविभ्रमभासमानां,
नव्यस्फुरद्रुचिरपत्रलतावलीकाम्।
दिष्ट्या वसन्त तिलकाञ्चितचारुशोभां,
कान्तां वनश्रियमिमां त्वमुपागतोऽसि ॥ २३१.१ ॥

उद्धर्षिणी सैतवस्य। सिंहोन्नता काश्यपस्य ॥ २३१.२ ॥

**र्नौ भौ गौ वलना ॥ २३२ ॥**

रनभभगगाः। यथा—

[3]"नव्ययौवननटस्य तनोति नियोगं,
निश्चितं वरतनुर्विकसन्मुखरागा।
हस्तकैरभिनयं कुरुते युवती यद्,
व्यश्नुतेऽङ्गवलनादि पदे पद एषा ॥ २३२.१ ॥

लतेत्यन्ये॑ः ॥ २३२.२ ॥

**न्रन्रल्गाः सुकेसरम् ॥ २३३ ॥**

नरनरलगाः। यथा—

[4]"घटयसे ज्यया किमिति काम कार्मुकं,
यदभवत् पुरस्तव जगद् वशंवदम् ॥
मधुकरीनिनादमयमभ्रमभ्रितैर्,
जलरुहां सुकेसरपरागचूर्णकैः ॥ २३३.१ ॥

---

1) नैतल्लक्ष्माङ्के किमुतेत्यत्र सहजप्रीत्येति—उभयोः समुद्राज्जातत्वात् बान्धवत्वम्। 2) सत्कर्णिकारेत्यत्र कर्णिका कर्णिकाभरणं पक्षे कर्णिकारा वृक्षास्तत्र चिता मिलिता ये वयः पक्षिगणस्तेषां भ्रमः। पक्षे विभ्रमो विलासः। पत्रलता पीनत्रिवलि उदरस्या त्रिवली। पक्षे पल्लवानां आवली। तिलको वृक्षविशेषः। पक्षे पुण्ड्रं च। कान्तां प्रियां मनोज्ञाम्। 3) नव्ययौवनेत्यत्र व्यश्नुते भजते। 4) घटयसे ज्ययेत्यत्र अन्यत्रापि वशीकरणं भ्रमिभ्रमितचूर्णकैर्भवनीत्यर्थः।

---

१ सिंहोदता P. २ अन्ये A. ३ घटयेज्यया N.

नीरू गावुपचित्रम् ॥ २३४ ॥

नीरिति नगणाश्चत्वारो गद्वयं च । यथा–

"अनुसर हिमकरकिरणसमूहं,
भज नवकिसलयमृदुशयनीयम् ।
प्रियसखि ननु शरदियमुपतस्थे,
यदभिसरति दिनपतिरुपचित्रम् ॥ २३४.१ ॥

न्जभ्जल्गा धृतिः ॥ २३५ ॥

नजभजलगाः । यथा–

"विहर नितम्बबिम्बफलके सुदृशां,
गतनिधनानि संचिनु धनानि भृशम् ।
रचय चिरं च सुन्दरनराधिपतां,
तदपि न किंचनास्ति तव चेन्न धृतिः ॥ २३५.१ ॥

मणिकटकमित्यन्ये[1] ॥ २३५.१ ॥

भौ रसल्गा दर्दुरकः ॥ २३६ ॥

भभरसलगाः । यथा–

"मृत्युमुपैति यदा यदा कणशो दल-,
त्येष तदापि न हन्त विश्वसनोचितः ।
कालमवाप्य पुनर्जनश्रवणज्वरं,
दुर्जनदर्दुरकः करोति कटूक्तिभिः ॥ २३६.१ ॥

भ्जस्नाद्गौ स्खलितम् ॥ २३७ ॥

भजसनेभ्यः परौ गौ । यथा–

"पुष्पशरस्य वतनुता सलेवणत्वं,
शाङ्गमधुरता चतुरता बहुकलत्वम् ।
सर्वमपि चास्य सुभगस्य रतये मे,
केवलमिदं व्यथयति स्खलितगोत्रम् ॥ २३७.१ ॥

महिता, कान्ता, वनमयूरश्चेत्यन्ये ॥ २३७.१ ॥

1) अनुसरेत्यत्र उपचित्रमिति–चित्रायाः समीपं उपचित्रम् । 2) विहर(हर) नितम्बबिम्बेत्यत्र बिम्बशब्दः शोभार्थं ततो नितम्बबिम्बमेव फलकं विपुलत्वात् । 3) मृत्युमुपैतीत्यत्र कणशः इति कणेन कणेन इत्यर्थे वीप्सायां शस् । विश्वसनोचितः विश्वासाय नो युक्तः । अवाप्येति–प्राप्य । जनकर्णज्वरं कटु कटित–वाग्भिः । 4) पुष्पशरस्येत्यत्र सखीं प्रति सखी आह–सर्वं युवस्य सुभगस्य रतये प्रीतयेऽस्ति । केवलं परस्त्रीनामग्रहणं पीडयति नान्यत् ।

1 after this P reads रजौ सौ ल्गौ भाजुपम्या. 2 सलवणत्वं N. 3 स्खलितगोत्रः P.

**लगौ चेदिन्दुवदना ॥ २३८ ॥**

भजसनेभ्यः परौ लघुगुरू चेदिन्दुवदना। यथा–

[1]सस्पृह इव त्वयि रवेरपि दयितस्,
त्वद्वदनवीक्षणवशाद् गलितधनुः।
ताडयति नैष भवतीं शरनिकरैर्-,
इन्दुवदने न रमणे तदसि रता ॥ २३८.१ ॥

**नभनता गौ शरभललितम् ॥ २३९ ॥**

नभनतगगाः। यथा–

[2]वहसि गन्धकरटिघटां पृष्ठदेशे,
कररदैः प्रहरसि च मत्ताम्बुवाहे।
दलयसि क्षितिधरशिरःपादपातैर्,
इदमहो शरभ ललितं ते न यत्नः ॥ २३९.१ ॥

**तच्छरभा घचैः ॥ २४० ॥**

तच्छरभललितं घचैश्चतुर्भिः षड्भिश्चेद्यतिः शरभासंज्ञम्। यथा–

मृगरिपुः शशकतुलनां यत्पुरस्तात्,
कलयति द्विरदद्लनव्यक्तकेलिः।
[3]तव सुतः स इह शरभोऽनन्यवीरः,
सुतवती ननु शरभिके त्वं तदेका ॥ २४०.१ ॥

**मभन्या गौ कुटिलम् ॥ २४१ ॥**

मभनयगगाः। घचैरिति वर्तते। यथा–

[4]श्रीचौलुक्यक्षितिपतिलक दिग्यात्रार्थं,
त्वत्सैन्येऽस्मिन् प्रसरति किल पातालेन्द्रः।
न्यक्कुर्वद्भूमीभरकुटिलितमूर्धा मन्ये,
साहाय्यार्थं रचयति भुजदण्डानुच्चैः ॥ २४१.१ ॥
हंसश्येनीत्येके ॥ २४१. ॥ १४।२२ ॥

**अतिशक्वर्यां स्जसस्या ऋषभः ॥ २४२ ॥**

सजससयाः। यथा–

---

1) सस्पृह इत्येत्र गलितधनुरिति–उकारान्तोऽप्यस्ति धन्वन् शब्दः। 2) वहसि गन्धेत्यत्र करसहिताः रदाः। अन्यथा प्राणितूर्याङ्गाणामिति सूत्रेण समाहृतिः स्यात् तथा नपुंसकता एकवचनं च स्यात्। यत्नः प्रयासः। 3) तव सुत इत्यत्र न विद्यते अन्यो वीरो यस्मात्सोऽनन्यवीरः। 4) श्रीचौलुक्येत्यत्र साहाय्यार्थं भुजदण्डस्य उच्चैःकरणं शङ्कायाः।

---

१ लगौ A. २ गन्धकरिघटां B. ३ न तु N. ४ कुटिलं घचैः G. ५ मूर्धा PN.

[1]जगतां विभुः पृथुजटापिहितांसदेशः,
सततं महर्षिगणसेवितपादपद्मः।
मकरध्वजप्रमथनप्रथितप्रभावः,
ऋषभध्वजः स भगवान् भवतोऽस्तु भूत्यै ॥ २४२.१ ॥

**नीसौ शशिकला ॥ २४३ ॥**

नीरिति नगणाश्चत्वारः सश्च। यथा—

[2]अरतिमति हि मम वपुषि विदधतीं,
तिरयसि यदि नवजलद शशिकलाम्।
स्वयमपि किमिति न कलयसि करुणां,
यदिह विरचयसि कटु रसितमहो ॥ २४३.१ ॥

अत्र सप्तभिर्यतिरित्येके। चन्द्रावर्तेति पिङ्गलः ॥ २४३.१ ॥

**सा स्रक् चैः ॥ २४४ ॥**

सा शशिकला चैः षड्भिर्यतिश्चेत् स्रक्संज्ञा। यथा—

प्रसरति तव सुभग विरहदहने,
शृणु यदजनि किमपि कुवलयदृशः।
सरसिजमपि तपति नवविचकिल-,
स्रगपि सपदि जनयति भृशमरतिम् ॥ २४४.१ ॥
मालेति पिङ्गलः ॥ २४४.१ ॥

**मणिगुणनिकरो जैः ॥ २४५ ॥**

शशिकलैव जैरष्टभिश्चेद्यतिर्मणिगुणनिकरः। यथा—

[3]नृवर यशसि मतिरविकलकलता,
भुजबलमनुपममविनयपरता।
मतिरनुगुरुजनमुचितचतुरता,
त्वयि जयति नृपतिमणिगुणनिकरः ॥ २४५.१ ॥

**नौ म्यौ यो मालिनी ॥ २४६ ॥**

ननमयया:। जैरिति[1] वर्तते। यथा—

प्रतिमुहुरिह[4] दोलान्दोलनव्यापृतानां,
कुवलयनयनानामाननैरुल्लसद्भिः।

1) जगतामित्यत्र विभुर्व्यापकः स्वामी च। महर्षिगणेति—महर्षयः सप्तर्षयः। गणाः प्रमथादयः। ऋषभध्वज आदिदेव ईश्वरश्च। 2) अरतिमित्यत्र भति हि इति—अतिशयेनेत्यर्थेऽखण्डमव्ययम्। कटुरसित-मिति—कठिनगर्जारवम्। 3) नृवर यशसीत्यत्र नृपमध्यः प्रधानराजानः। 4) इहेति—वसन्ते। व्यापृतानामिति—व्याक्षिप्तानाम्। द्यौः आकाशः।

१ पिहितांस॰ N. २ इत्या A. ३ इति पाश्चात्यच्छन्दसोनुवर्तते E.

विमललवणिमाम्भश्चन्द्रिकां द्राक्[1] किरद्भिर्,

नवशशधरमालामालिनीवाभवद् द्यौः ॥ २४६.१ ॥

नान्दीमुखीति[2] भरतः ॥ २४६.१ ॥

**नौ मो रौ चन्द्रोद्द्योतः ॥ २४७ ॥**

ननमरराः । जैरिति वर्तते । यथा—

[1]ज्वलति सुभग तस्यास्त्वद्विप्रयोगानले,

भवति न खलु किंचित् प्रीत्यै कुरङ्गीदृशः[3] ।

सपदि दहति देहं यथान्दुनोऽपि द्रुचः,

प्रथयति नवचन्द्रोद्द्योतोऽपि नेत्रव्यथाः[4] ॥ २४७.१ ॥

**नौ तभ्रा उपमालिनी ॥ २४८ ॥**

ननतभराः । जैरिति वर्तते । यथा—

[2]नृपवर रिपवस्ते विहाय पुरस्थितिं,

नवनवमुनिमुद्राजुषः खलु संप्रति ।

विदधति तृणपर्णोटजान्यभिजाह्नवी-[5],

यमुनमनु च चर्मण्वतीमुपमालिनि ॥ २४८.१ ॥

**मिट् यौ चित्रा ॥ २४९ ॥**

मिरिति मगणत्रयं यगणद्वयं च । जैरिति वर्तते । यथा—

[3]शत्रौ मित्रे हर्म्येऽरण्ये संमदे वा गदे वा,

राज्ये भैक्षे[6] रत्ने लोष्टे काञ्चने वा तृणे वा ।

स्रोतस्विन्यां[7] कामिन्यां वा निन्दने वा स्तुतौ वा,

चित्रां चित्तावस्थां हित्वा संश्रयेथाः समाधिम् ॥ २४९.१ ॥

मण्डूकी, चञ्चला चेत्यन्ये[8] ॥ २४९.१ ॥

**माद्रम्ययाश्चन्द्रलेखा छैः ॥ २५० ॥**

मगणात्परे रमयया । छैरिति सप्तभिर्यतिः । यथा—

[4]राजन् सत्यं वदेतद् ब्रूमोऽद्भुतं वर्णनं ते,

दोर्दण्डश्यामभिः स स्पर्धां करोतु त्वदीयाम् ।

आच्छिन्द्यांचो[9] मुरारेर्वक्षःस्थलात् कौस्तुभं वा,

यः कर्षेच्चन्द्रलेखां शंभोर्जटामण्डलाद्वा ॥ २५०.१ ॥

**राद्धा ॥ २५१ ॥**

1) ज्वलति सुभगेत्यत्र भवद्वियोगाग्नौ । प्रीत्यै संतोषायेति । नवचन्द्रोद्द्योत—इति ज्योत्स्ना । 2) नृपवरेत्यत्र मालिनी नदीविशेषस्तस्याः समीपम् । 3) शत्रौ मित्रे इति—संमदे हर्षे । गदे रोगे । 4) राजन् सत्यमित्यत्र आच्छिन्द्यादिति—हठेन गृह्णाति । मुरारेर्विष्णोः ।

१ द्राग् N. २ नान्दीमुखीति C. ३ कुरङ्गदृशः A. ४ नेत्रव्यथान् A; नेत्रव्यथाम् P. ५ नृपपर्णोट॰ N. ६ भैक्ष्ये CP. ७ श्रोत॰ AB. ८ चेत्यन्ये BP. ९ आच्छिद्याचो N.

रगणात्परे यदि रम्ययास्तदा वा चन्द्रलेखा । ररमयया: । छैरिति वर्तते । यथा —

"[1]एक एव क्षणोऽसावानन्दनिर्ष्यन्दहेतुः,
सत्कृतैः प्राक्तनैर्मे केश्चित् सखेऽद्य प्रवुद्धम् ।
नेत्रनीलोत्पलानां पीयूषवृष्टिं किरन्ती,
यत्पुरः कम्बुकण्ठी सा चन्द्रलेखेव दृष्टा ॥ २५१.१ ॥

**स्जनन्या एला डैः ॥ २५२ ॥**

सजननया: । डैरिति पञ्चभिर्यतिः । यथा —

"[2]चलितैर्घटोद्भवमुनिर्दिशमभि यस्य,
प्रचलैर्यलैर्यलमथनसदृशमूर्तेः"[3] ।
"[4]निपिपेविरे चिरमुदधितटवनान्ताः,
परितो लसद्वहलवलिचकुलैलाः ॥ २५२.१ ॥

**[5]न्जभज्राः प्रभद्रकम् ॥ २५३ ॥**

नजभजरा: । यथा —

"[6]जयति जगत्त्रयोपकृतिकारणोदयो,
जिनपतिभानुमान् परमधाम तेजसाम् ।
भविकसरोरुहां गलितमोहनिद्रकं,
भवति यदीयपादलुठनात् प्रभद्रकम् ॥ २५३.१ ॥

**र्जर्जरास्तूणकम् ॥ २५४ ॥**

रजरजरा: । यथा —

"[6]स्फीतनव्यगन्धलुब्धषट्पदौघसेविताग्-,
चैत्रमासि पश्य भान्ति चूतमञ्जरीशिखाः ।
ऊर्ध्वदृश्यमानकङ्कपत्रकृष्णपक्षकाम्,
तूणका इवेह वीरमन्मथेन टन्धिताः ॥ २५४.१ ॥

**नो जौ भ्रौ कलभाषिणी ॥ २५५ ॥**

नजजभरा: । यथा —

"[7]स्फुरति च दक्षिणमारुतो मृदुशीतलः,
प्रतिदिशमुल्लसितं च केसररेणुभिः ।

1) एक एव क्षण इत्यत्र यत् यस्मात् कारणात् । पुरोऽग्रे । 2) चलितैर्घटोद्भवेति – अगस्त्यदिशं दक्षिणामभि अभिलक्ष्यी कृत्येति भावः । 3) इन्द्रतुल्यमूर्तेः । 4) सेविता इति । 5) जयति जगत्त्रयेत्यत्र प्रकृष्टं भद्रं प्रभद्रं तदेव स्वार्थे के प्रभद्रकम् । 6) स्फीतनव्येत्यत्र ऊर्ध्वं दृश्यमानाः कङ्कपत्राणां याश्वतो कृष्णाः पुङ्खका येषु ते । 7) स्फुरतीत्यत्र मित्रे प्रति मित्रं माह । उल्लसितं प्रसृतम् । मिश्र[पुस्तके] कोकिलध्वनिः । प्रसृता व्यासाः । मिर्यति – वल्लभा ।

१ निरपन्द॰ N. २ चलितैः N. ३ उद्दतट N. ४ नजभभाः GHP. ५ भन्द॰ A. ६ स्फ्य- पुल्लका॰ ABFP.

पिकयुवतेः प्रसृताश्च पञ्चमगीतयस्,
तदपि सखे मयि न मिथ्या कलभाषिणी ॥ २५५.१ ॥
अरविन्दमित्येके ॥ २५५.१ ॥

**रान्नभभ्राः सुन्दरम् ॥ २५६ ॥**

रगणात्परे नभभराः । यथा—

[1]निर्ममे सपदि पत्रलता न कपोलयोर्,
नापि यावकरसो निहितोऽधरपल्लवे ।
वल्लभाभिसरणोत्सुकया सुदृशानया,
सुन्दरत्वमधिकं तदपि प्रतिपद्यते ॥ २५६.१ ॥
मणिभूषणं, रमणीयं चेत्येके ॥ २५६.१ ॥

**नाद्गौः ॥ २५७ ॥**

नगणात्परे नभभ्राश्चेत्तदा गौर्नाम । ननभभराः । यथा—

[2]अनुदिनमपि हन्त दुहन्ति कवीश्वरास्,
मुंदति न च यदीयसदुक्तिपयः शुचि ।
हृदयमुकुरमध्यमधिश्रयतां सदा,
निरुपमचरितप्रथिता मम सैव गौः ॥ २५७.१ ॥

**नौ रो यौ भोगिनी ॥ २५८ ॥**

यथा—

[3]दधति तव चुलुक्यचन्द्र धात्रीं भुजेऽस्मिन्,
भजतु जलनिधौ चिराय निद्रामुपेन्द्रः ।
विदधतु दिगिभाः करेणुकाभिर्विलासं,
सममभिरमतां च वासुकिर्भोगिनीभिः ॥ २५८.१ ॥

**त्जौसस्याः शिशुः ॥ २५९ ॥**

तजससयाः । यथा—

[4]त्वं नासि दृशोः पथि विमुक्त तथापि नाथ,
पापं भुवने तव गिरो जिन नाशयन्ति ।

1) निर्ममे सपदीत्यत्र यावकेति—अलक्तकरसः । अधरपल्लवे—स्त्रियः अधरं शोभार्थं अलक्तकरसेन सिञ्चन्ति । भर्त्रभिगमनव्याकुलतया अङ्गीक्रियते । 2) अनुदिनमपीति [अत्र] हन्तेति—कोमलामन्त्रणे । दुहन्ति दोहनं कुर्वन्ति । मुकुरेति—आदर्शमध्यम् । गौरिति—धेनुर्वाक् च । 3) दधति तव चुलुक्येत्यत्र उपेन्द्रः कृष्णः । दिगिभाः दिग्हस्तिनः । वासुकिः शेषनागः । 4) त्वं नासि दृशोरित्यत्र विमुक्तेति—[illegible] विशेषेण कर्मणो मुक्तो विमुक्तस्तत्सम्बोधनम् । ध्वनितेनेति—शब्देन ।

१ सुन्दरीत्वं N. ४ मुदति N. २ मध्यानधि॰ N. ३ तजससयाः P.
८ छन्दो॰

त्रस्यन्ति हि शैलशिखरान्तरितस्य दूरात्,
लीलाध्वनितेन मृगराजशिशोर्गजेन्द्राः ॥ २५९.१ ॥

**भ्यसस्याः केतनम् ॥ २६० ॥**

भयससयाः। यथा –

[1]कोकिलवधूनां कलपञ्चमरागगीतिश्,
चूतविटपानां नवपल्लवसंपदश्च।
दक्षिणसमीरो मृगशावदृशां कटाक्षाः,
बिभ्रति हि जैत्रायुधतां झषकेतनस्य ॥ २६०.१ ॥

**त्भौ जौ रो मृदङ्गः ॥ २६१ ॥**

तभजजराः। यथा –

कृत्वा जगत्त्रयजयं मकरध्वजप्रभुः,
संगीतकं सपदि कारयते रतेः पुरः।
आकाशरङ्गभवने नरिनर्ति नर्तकी,
विद्युद्, घनैरपि [2]मेघमृदङ्गवादकः ॥ २६१.१ ॥

**मुः कामक्रीडा ॥ २६२ ॥**

मुरिति पञ्च मगणाः। यथा –

उक्ता वाचं नो दत्ते तल्पे शेते व्यावृत्ताङ्गी,
[3]पर्याक्षिप्तक्षौमप्रान्ता प्रस्थातुं चाकूतत्याशु।
कामक्रीडावार्तागोष्ठीप्रारम्भेऽप्युर्बिभ्रौटा,
धत्ते पत्युः प्रीत्यै वामारम्भाप्येवं सा बाला ॥ २६२.१ ॥ १५।२१ ॥

**अष्टौ नत्रा भौ गो मणिकल्पलता ॥ २६३ ॥**

नजरभभगाः। यथा –

उपलक्षणस्वरूपचिन्तामणिकल्पलता-,
[4]व्यतिकरतो मुधैव मेरुर्मदमुद्वहति।
जयति यदुत्रयस्य एकोऽयमचिन्त्यफलं,
प्रददद्दलंकरोति नेमिः स्वयमेव जिनः ॥ २६३.१ ॥

**भीः स्गौ हारमाला ॥ २६४ ॥**

भीरिति भचतुष्टयं सगौ च। यथा –

1) कोकिलवधूनामित्यत्र चूतविटपानां सहकारशाखानाम्। झषकेतनस्येति – कन्दर्पस्य। 2) मेघमृदङ्गवादक इति – मेघा एव मृदङ्गाः तान् वादयतीति तथोक्तः। 3) पर्याक्षिप्तेत्यत्र पराङ्मुखी पर्याक्षिप्तः आकर्षितो वक्षस्य प्रान्तो यया सा। वामारम्भेति – विपरीतारम्भापि कामोद्रेकात् प्रीत्यै भवति। 4) व्यतिकरत इति – सम्बन्धादेव मेरुद्वैधं बिभर्ति।

१ केतनके P.

[1]ऐक्षवकार्मुक कौसुमसायक मदमानिन्,
मुञ्च चतुर्मुखशंभुचतुर्भुजजयगर्वम्[1]।
उत्तमसंयमवर्मवृतात्मनि जिननाथे,
संप्रति शम्बरसूदन संहर शरमालाम् ॥ २६४.१ ॥

**भ्गौ संगतम् ॥ २६५ ॥**

भ्रिति पञ्चभगणा गुरुश्च। यथा–

[2]वीर तवासिपथेन गतैररिभिस्त्रिदिवं,
तत्र दिवस्पतिमानिभिराकुलितः[2] प्रबलैः।
अद्य हरिर्विमृशन् सचिवैः सह तद्विजये,
त्वन्नवसंगतकल्पनमौपयिकं मनुते ॥ २६५.१ ॥

पद्ममुखी, सुरतावसथं, उद्धरणं, सोपानकं चान्येषाम्[3] ॥ २६५.१ ॥

**म्गौ कामुकी ॥ २६६ ॥**

म्रिति मगणपञ्चकं गुरुश्च। यथा–

संवृत्तोऽयं सन्ध्याकालः प्राप्तोऽस्ताद्रेः शृङ्गं भानुर्,
विस्फूर्जद्भिर्ध्वान्तस्तोमैरेकीभूतं [3]काष्ठाचक्रम्।
चापाकृष्टिं व्यातन्वानः कन्दर्पोऽपि क्रीडत्येवैद्,
गच्छन्त्येतास्त्यक्ताशङ्कं क्रीडास्थानं कामुक्योऽपि ॥ २६६.१ ॥

**स्गौ वा ॥ २६७ ॥**

स्रिति सगणपञ्चकं गुरुश्चेदियमपि कामुकी। यथा–

[4]अपयाहि पितामहचित्तविलोभिनि धिक् त्वाम्,
अपि[4] कौशिककामुकि न त्वमपि त्रपसे किम्।
असि हास्यपदं नलकूबरकामिनि यद्वः,
कुलिशातिदृढेऽत्र जिनेन्द्रहृदि प्रविविक्षा ॥ २६७.१ ॥

सोमडकमित्यन्ये ॥ २६५.१ ॥

---

1) ऐक्षवकार्मुकेत्यत्र–इक्षोरिदं ऐक्षवम्। कुसुमसंबन्धिनो बाणा यस्य कौसुमसायकस्तत्संबोधनम्। महेश्वरकृष्णजयमानम्। वर्मेति–सन्नाहः। जिनपतौ। शम्बरसूदनेति–हे काम। 2) वीर तवेत्यत्र दिवस्पतिमानिभिः पूज्यैः। नवसंगतेति–नवं संगतं मैत्र्यं तस्य यत्कल्पनं निष्पादनं एवंविधं उपायम्। 3) काष्ठाचक्रमिति–दिक्चक्रम्। कामुक्यः कुलटाः। 4) अपयाहीति–पितामहो ब्रह्मा तस्य ध्यानारूढस्य चित्तप्रलोभि[नी] इयं तिलोत्तमा। इन्द्रस्य विश्वामित्रस्य वा कामुकी उर्वशी तस्य संबोधनम्। अत्र कौशिकशब्दस्योभयार्थत्वम्। त्रपसे लज्जां न करोषि। नलकूबरेति–धनदपुत्रकामिनि हे रम्भे। कुलिशेति–वज्रादप्यतिदृढे।

---

१ चतुर्भुज शंभुचतुर्भुज A.  २ आकुलितः N.  ३ सुरता च सयमुद्धरणसो॰ N.  ४ अपि.॰FN.

**ञुगौ चलधृतिः ॥ २६८ ॥**

ञुरिति नगणपञ्चकं गुरुश्च। यथा—

प्रणमदखिलसुरपतिकनकमुकुट-,
स्फुटरुचिनिचितनखमणिकिरणचये।
कुरु जिनचरणजलरुहि नमनरुचिं,
[1]चलधृतिमपजहि च विषयसुखधियम् ॥ २६८.१ ॥

**ञुलावचलधृतिः ॥ २६९ ॥**

ञुरिति नगणपञ्चकं लघुश्च। यथा—

विलुलितचिकुरमधरनिहितदशनम्,
अविरलपुलकनिचितकुचयुगमयि[2]।
रतिरसरभसमणितमुरसितमिह,
विलसति तव सखि सुरतमचलधृति[3] ॥ २६९.१ ॥

**नभौ जिगौ मङ्गलमङ्गना घैः ॥ २७० ॥**

नभौ जिरिति जगणत्रयं गुरुश्च। घैरिति चतुर्भिर्यतिः ॥ यथा—

[4]कुटिलतां दधती गुरुभोगमदोद्धता,
विदधती प्रलयवेपथुसादपरंपराम्।
विषधरीव पुरतः स्फुरिता[1] यतिनामहो,
विचरतां सुगतिमार्गममङ्गलमङ्गना ॥ २७०.१ ॥

**भ्रनिगा ऋषभगजविलसितं छैः ॥ २७१ ॥**

भरौ नगणत्रयं गुरुश्च। छैरिति सप्तभिर्यतिः। यथा—

[5]अद्भुततुङ्गमूर्तिरतिशयललितगतिर्,
देव समग्रकर्मवनविदलनरसिकैः[2]।
निर्भरमन्तरङ्गरिपुबलविजयपटुर्,
नाथ दधासि तत् त्वमृषभगजविलसितम् ॥ २७१.१ ॥
मत्तगजविलसितमिति भरतः ॥ २७१.१ ॥

1) चलधृतिमिति—अस्थिरस्वास्थ्यं अपजहि त्यज। 2) अयीति—कोमलामन्त्रणे। 3) अचलधृतीति—अचला स्थिरा धृतिः समाधिर्यत्र। 4) कुटिलतामित्यत्र वक्रत्वं उभयत्र। गुरुश्चासौ भोगश्च तेन उद्धता दर्पभाग्। पक्षेऽहिकायः। मूर्च्छाकम्पस्वेदध्यानैः। भुजगीव अग्रतः। स्फुरिता जाता। यतिनां यतिनाम्। [अहो]आश्चर्यम्। 5) अद्भुततुङ्गेत्यत्र अन्तरङ्गेति—गजपक्षे अन्तर्मध्ये अङ्गति गच्छति यद्रिपुबलम्।

१ स्फुरता N. २ रसिक N.

निजस्गा ललितपदं डैः ॥ २७२ ॥

निरिति नगणत्रयं जसगाश्च । डैरिति पञ्चभिर्यतिः । यथा—

[1]चुलुककुलजलनिधिशशाङ्क तव दीनं,
रिपुनिवहमतितरलकातरमुपेक्ष्य ।
त्वदसिरुचितमसि वितते युधि भवन्तं,
*ललितपदमभिसरति वीर जयलक्ष्मीः ॥ २७२.१ ॥*

य्मन्स्रगाः जयानन्दं चैः ॥ २७३ ॥

यमनसरगाः । चैरिति पड्भिर्यतिः । यथा—

[2]नमच्छक्रश्रेणीमणिमुकुटकोटीविटङ्कैर्,
निघृष्टाङ्घ्रे देव प्रबलजडलच्चण्डभानो ।
सुधाधारासारैरिव सदसि वाचां प्रपञ्चैर्,
जयानन्दस्यन्दं सपदि जगतामादधानः ॥ २७३.१ ॥

प्रवरललितमित्येके ॥ २७३.१ ॥

भ्रौ त्रौ ग्नौ महिषी ञैः ॥ २७४ ॥

भरनरनगाः । ञैरिति दशभिर्यतिः । यथा—

[3]सिद्धनरेन्द्रनन्दन भवद्विपक्षनगरे,
संप्रति सौधभित्तिलिखितास्तुरंगमचमूः ।
वीक्ष्य नितान्तकोपकुटिलेक्षणा प्रति मुहुः,
शृङ्गविघट्टनैर्विघटयत्यरण्यमहिषी ॥ २७४.१ ॥

म्भौ न्मौ ग्नौ मदनललिता घचैः ॥ २७५ ॥

मभनमनगाः । घचैरिति चतुर्भिः पड्भिश्च यतिः । यथा—

[4]गाढाक्रान्त्वा कुचयुगभरेणार्ता च विरहे,
*नित्योद्भिन्नातिघनजघनप्राग्भारधरणे ।*
सध्रीचीभिर्धृतकरतला कान्ते कृतरतिर्,
मन्दं मन्दं मदनललिता याति प्रियगृहम् ॥ २७५.१ ॥

न्जभ्जर्गा वाणिनी ॥ २७६ ॥

नजभजरगाः । यथा—

1) चुलुकेत्यत्र वैरिवृन्दम् । त्वत्खड्गकान्तिरेव तमोऽन्धकारः तस्मिन् विततै विस्तृते सति युधि संग्रामे अभिमुखमागच्छति । 2) नमदित्यत्र इन्द्रश्रेणिरत्नमुकुटकोट्यग्रैः । जयश्रीस्योर्निष्यन्दं रसं परंदि । 3) सिद्धनरेन्द्रेत्यत्र त्वद्वैरिपुरे । अरण्यमहिषीति—परस्परं नित्यवैरत्वादिति भावः । 4) गाढाक्रान्तेत्यत्र सध्रीचीभिः सखीभिः । कान्ते भर्तरि । कृतप्रीतिः ।

१ चुलुक्य॰ com; N; २ यमनसर्गाः GH; ३ तुरंगचमूः N. ४ वीक्ष्य A; ५ विघटनैः N.

"अविरलपुष्पबाणललितानि दर्शयन्ती,
परिमलहारिताभरसवक्त्रमुद्वहन्ती ।
मदकलराजहंसगमनानि भावयन्ती,
शरदिह मानसं हरति हन्त वाणिनीव ॥ २७६.१ ॥

**नजिर्गो वा ॥ २७७ ॥**

नगणो जत्रयं रगणो गुरुश्च यदा तदापि वाणिनी । यथा—
"कुरु करुणां वितर प्रतिवाचमत्र कां या,
हृदि दयितां निदधासि निमीलिताक्षियुग्मम् ।
अयमपि ते ननु दासजनोऽनुकम्प्य एव,
जयति स वीरजिनो गदितो सुवाणिनीभिः ॥ २७७.१ ॥

**ज्रज्रज्गाः पञ्चचामरम् ॥ २७८ ॥**

जरजरजगाः । यथा—
"त्वदीयपादपङ्कजे निधाय भक्तिमुज्ज्वलां,
मनुष्यकीटका वयं विदध्महे किमद्भुतम् ।
यदीयजन्मनो महोत्सवं तथा प्रचक्रिरे,
जिनेन्द्र सप्तविंशतिश्च पञ्च चामराधिपाः ॥ २७८.१ ॥

**र्जर्जर्गाश्चित्रम् ॥ २७९ ॥**

रजरजरगाः । यथा—
"कान्तिरिन्दुकौमुदीसहोदरा यचोविलासः,
सर्वदा सुधोज्ज्वलो यशश्च दुग्धसिन्धुरन्धुः ।
क्षुण्णशङ्खसोदरा गुणास्तवामलं चरित्रं,
चित्रमेतदेभिरीश मे मनस्तथापि रक्तम् ॥ २७९.१ ॥

**म्नस्तगौ सुरतललिता ॥ २८० ॥**

मनसतरगाः । यथा—
"संप्राप्ते मधुसमयसाम्राज्ये पिकीसमूहाः,
शंसन्ति प्रतिदिशमिदं मन्ये नितम्बिनीनाम् ।

1) अविरलपुष्पेत्यत्र अन्यत्र बाणो वृक्षभेदः । छेका मत्ता च वाणिनी । 2) कुरु करुणामित्यत्र सगमदेवेन मायया कामिनीरूपाणि यानि मिथ्यादिवानि ताभिरलम् । निमीलितेति क्रियाविशेषणम् । मदिव इति—प्रोक्तः । स्वर्गमच्छेकरामाभिः । 3) त्वदीयपादेत्यत्र द्वात्रिंशद् देवेन्द्राः । व्यन्तरेन्द्रा न गण्यन्ते अल्पर्द्धित्वात् । 4) कान्तिरिन्दुरित्यत्र पयःपयोधिसोदरः । रक्तमिति—रागभाक् । 5) संप्राप्ते इत्यत्र शंसन्ति कथयन्ति ।

१ युग्म. DPP. २ नु कं एवं N, नुकम्प्य एवं P. ३ स dropped in N. ४ जन्मतो N. ५ dropped in N.

मानित्वं त्यजत सुभगंमन्यत्वमस्तु दूरे,[1]
कन्दर्पः सुरतललितोपाध्यायकं प्रपेदे ॥ २८०.१ ॥

**भ्रौ न्भौ भ्गौ शैलशिखा ॥ २८१ ॥**

भरनभभगाः। यथा—

[1]शीतरुजा विधुतचिबुकैः कृतदन्तरवो,
गाढतरप्रयुक्तगजदन्तकराभिनयः।
शैलशिखाप्रदेशमधिरुह्य तुषारऋतौ,
पश्यति भास्करोदयपथं तव वैरिजनः ॥ २८१.१ ॥

**भ्रौ य्नौ न्गौ वरयुवतिः ॥ २८२ ॥**

भरयननगाः। यथा—

[2]स्फूर्जति संगरप्रदोषे तुरगखरखुर-,
क्षुण्णरजोन्धकारघोरे विलसति नृपते।
वैरिमहीभुजां समन्तात्सुरवरयुवती-,
संगमहेतुरेकदूती भवदसिलतिका ॥ २८२.१ ॥

**र्नौगा ललना ॥ २८३ ॥**

रगणो नगणचतुष्टयं गुरुश्च। यथा—

विधु चक्षुरनिलहतकुवलयतरलं,
प्रक्षिपत्यतनुमृगपतिनिनदचकिता।
सिद्धराजसुत भजति मृगयुवतितुलां,
सांप्रतं वनभुवि तव रिपुनृपललना ॥ २८३.१ ॥

**सौ नौ मो गो वेल्लिता ॥ २८४ ॥**

यथा—

[3]सरितां कमितुः सर्वेकितघनफेनव्याजाद्-,[2]
वितितेषु तटेषु बहलवलीच्छायेषु।
श्रममाप्नवती त्रिजगति संचारेर,
नियतं नृप [4]वेल्लितसुरसमभजत् त्वत्कीर्तिः ॥ २८४.१ ॥

**म्तौ स्तौ त्गौ कोमललता घडैः ॥ २८५ ॥**

मतसततगाः। घडैरिति चतुर्भिः पञ्चभिर्यतिः। यथा—

---

1) शीतरुजेत्यत्र गाढतर प्रयुक्तो गजदन्तानां कराभ्यां कृत्वाभिनयोऽनुकरणं येन स तथा। श्लेषोऽर्थः। पार्श्वबन्धः। 2) स्फूर्जतीत्यत्र समासस्तरात्रिमुखे। 3) सरितां कमितुरित्यत्र समुद्रस्य। स्वर्वेकितेति—फेनस्तबका हि कल्लोलैरितस्ततः प्रेङ्खोल्यन्ते। लवलीलताभि.। 4) वेल्लितेति—आन्दोलनसुरतम्।

---

१ सुभगंमान्यत्वं N. २ सर्वकित॰ N.

[1]मत्तालीनां स्निग्धमधुरोद्गारैर्मुहुर्गीतकैर्,
आक्षिप्तोऽस्यारोहणमृगः स्वच्छन्दचारी यतः ।
मन्दं मन्दं दक्षिणमरुद्व्यालेप तेनाधुना,
सद्यःपुष्पत्कोमललतालास्यैकशिक्षागुरुः ॥ २८५.१.१६।२३ ॥

**अत्यष्टौ यम्नस्भल्गाः शिखरिणी चैः ॥ २८६ ॥**

यमनसभलगाः । चैरिति षड्भिर्यतिः । यथा —
[2]हरन् सर्वाम्भोजश्रियमविरतं सिन्धुपतिना,
कृतार्थस्तन्वानो निशितमसि विद्योतमसमम् ।
सुधांशुस्त्वद्वंशे त्वमिव जयसिंहक्षितिपते,
कलापूर्णः पश्योदयशिखरिणीह्याभ्युदयते ॥ २८६.१ ॥

**ज्सज्स्यल्गाः पृथ्वी जैः ॥ २८७ ॥**

जसजसयलगाः । जैरित्यष्टभिर्यतिः । यथा —
[3]त्वदीयरिपुभूभुजां पुरि पुरारिवेश्मायतो,
निरीक्ष्य चमरी नृपं सपदि मन्मथव्याकुला ।
परिस्पृशति जिह्वया [4]ककुदकेन कण्डूयते,
निमीलितविलोचना किल चुलुक्यपृथ्वीपते ॥ २८७.१ ॥
विलम्बितगतिरिति भरतः ॥ २८७.१ ॥

**भ्रौ न्भौ न्लौ गो वंशपत्रपतितं जैः ॥ २८८ ॥**

भरनभनलगाः । जैरिति दशभिर्यतिः । यथा —
[5]जर्जरसारिमध्यलुठिताः क्वचिदपि गजिनो,
भङ्गुरवंशपत्रपतिताः क्वचिदपि रथिनः ।
क्वापि च सादिनो [6]हतुरगमयल्पिहिताः,
शत्रुबलेऽभवंस्त्वयि रणाङ्गणमवतरति ॥ २८८.१ ॥
वंशदलमित्यन्ये ॥ २८८.१ ॥

---

1) मत्तालीनामित्यत्र आरोहणमृग इति — वातो हरिणवाहनः स च गीतिरति. । मृगं विना वातोऽपि धर्तुं न शक्नोति । काव्यं नाट्यम् । 2) हरन् सर्वामित्यत्र यद्यपि जयसिंहदेवधारके धारायां नदि(र)धर्मराजोऽभूत् तथापि तस्य या राष्ट्रकोशादिसप्ताङ्गलक्ष्मीः सा सर्वापि भोजोपार्जितासीत् । उत्कटत्वाच्च विरोधः । सिन्धुदेशराजः समुद्रश्च । तेन विहितपूजः । निशि रजन्यां अन्धकारे विशिष्टोद्योत निरुपमं प्रकाशम् । पक्षे निशितं तीक्ष्णं । खड्गकान्ति कुर्वन् । तस्य चन्द्रस्य वंशे यथा त्वं तथा उदयगिरौ सुधांशुः । कलापोदशः पक्षे विज्ञानम् । 3) त्वदीयरिपुभूभुजामित्यत्र ईश्वरायतने चमरी वनगौ कामान्धा पाषाणमय वृष भवाननो जिह्वास्पर्शनाद्यनङ्गचेष्टाः करोति । 4) ककुदकेनेति — अकारान्तोऽप्यस्ति । 5) जर्जरसारीत्यत्र सारि. अंबाडीति प्रतीता । गजिनो गजारूढाः । वंशा. वाहनानि तेभ्यः । रथिन इति रथवन्तः । सादिनोऽश्ववाराः ॥ 6) हतुरगेति — उपरि तुरगा अधस्तादश्वसमूहा [ सादिनो ? ] जाता इति भाव. ।

---

१ स च S. २ कृतार्थ P. ३ शारि P. ४ गजिनो S.

**सौ ज्भौ जो गावतिशायिनी[1] ॥ २८९ ॥**

ससजभजगगाः । [2]ऐरिति वर्तते । यथा माघस्य[3] —

इति धौतपुरन्ध्रिमत्सरान् सरसि मज्जनेन,
श्रियमाप्ततोऽतिशायिनीमपमत्याङ्गभासः ।
अवलोक्य तदेति यादवानपरवारिराशेः,
शिशिरेतररोचिषाप्यपां ततिषु मङ्क्तुमीषे ॥ २८९.१ ॥

यादवीत्यन्ये ॥ २८९.१ ॥

**मो भ्नौ तौ गौ मन्दाक्रान्ता घचैः ॥ २९० ॥**

मभनततगगाः । घचैरिति चतुर्भिः षड्भिश्च यतिः । यथा—

जन्मस्नाने स चरमजिनः स्वर्णकुम्भौघधारा-,
सारं सोढा कथमिति पुरा वज्रिणा शङ्कितेन ।
दृष्टः पश्चाज्जयति चरणाङ्गुष्ठपर्यन्तलीला-,
मन्दाक्रान्तामरगिरिशिरःकम्पतो विस्मितेन ॥ २९०.१ ॥

श्रीधरेति भरतः ॥ २९०.१ ॥

**मभ्नरसल्गाः भाराक्रान्ता ॥ २९१ ॥**

मभनरसलगाः । घचैरिति वर्तते । यथा—

[2]चौलुक्येन्द्र त्वमिह न हि चेदिमां किल धारयेः,
कूर्मक्रोडाधिपफणिपतिद्विपाद्रिषु सत्स्वपि ।
सर्पन्त्या ते करटिघटया दिशां विजये तदा,
भाराक्रान्ता नृप वसुमती क्षणान्निपतेदधः ॥ २९१.१ ॥

**मभ्नम्यल्गाः हारिणी ॥ २९२ ॥**

मभनमयलगाः । घचैरिति वर्तते । यथा—

प्रासादेषु त्वदरिनगरे शून्यत्वमासेदुषि,
श्रीचौलुक्य क्षितिपतिशिरश्चूडामणे सम्प्रति ।
प्रेङ्खोलन्तो विषधरततिर्वालम्बिताः कञ्चुका,
व्यातन्वन्ति ध्वजपटतुलामुच्चैर्मनोहारिणीम् ॥ २९२.१ ॥

---

1) माघस्येन्–माघसम्बन्धि[illegible] । शिशिरैः–मूर्धन । 2) चौलुक्येन्द्र कल्पवृक्षवल्लीपरि-त्यज्यिर्वयांवृत्तु ।

---

१ ऐ added in [illegible]. २ पु[illegible] ३ [illegible] A. ४ [illegible] B. ५ [illegible] A. ६ [illegible] AB.

७ [illegible]

**न्सौ म्रौ स्लौ गो हरिणी चचैः ॥ २९३ ॥**

नसमरसलगाः । चचैरिति षड्भिश्चतुर्भिर्यतिः । यथा—

कथय किमियं लक्ष्मच्छाया शुचेस्तु भवेत् कथं,
तव हिमरुचे यद्वोत्सङ्गे कृतः कृपया मृगम् ।
नभसि रभसाद् यद्वाटोपप्रधावितलुब्धक-,
क्षुभितहरिणीगर्भाद् भ्रष्टः कुरंगक एव हि ॥ २९३.१ ॥

वृषभललितमित्येके ॥ २९३.१ ॥

**नः स्मौ तौ गौ पद्मम् ॥ २९४ ॥**

नसमततगगाः । चचैरिति वर्तते । यथा—

त्यजत मनुजा जातेर्गर्वं किं वंशवैकया स्यात्,
गुणपरिचयो लोकेऽत्यन्तं हन्त प्रचे प्रतिष्ठाम् ।
अजनि चुलुकाचान्ताम्भोधिः कुम्भजन्माप्यगस्त्यः,
[1]कुलगृहमभूदेव्या लक्ष्म्याः पङ्कजातं च पद्मम् ॥ २९४.१ ॥

**नसम्यल्गा रोहिणी ॥ २९५ ॥**

नसममयलगाः । चचैरिति वर्तते । यथा—

[2]कुवलयमुदं व्यातन्वानः पूर्णोल्लसन्मण्डलः,
शिरसि घटयन् पादन्यासं निःशेषपृथ्वीभृताम् ।
उदयमधुना प्राप्तः श्रीमत्सिद्धेन्द्रसूनो भवान्,
इव [3]कृतबुधानन्दः सोऽयं श्रीरोहिणीवल्लभः ॥ २९५.१ ॥

**नुरू गौ वसुधारा ङैः ॥ २९६ ॥**

नुरिति पञ्च नगणाः गुरुद्वयं च । ङैरिति पञ्चभिर्यतिः । यथा—

[4]प्रणतसुरविसरमणिमुकुटतटकोटि-,
परिघटितचरणनखरुचिनिचयरम्ये ।
[illegible] भवति भगवति विहरति जिननाथे,
प्रतिभवनमभिर्वतति जगति वसुधारा ॥ २९६.१ ॥

---

1) कुलगृहं प्रधानसदनम् । 2) कुवलयमुदमित्यत्र—कैरवं भूवलयं च । मण्डलं बिम्बं देशश्च । कुर्वन् । प्रादानां चरणानां किरणानां च न्यासम् । समग्राणां राज्ञां पर्वतानां च । 3) कृतबुधेति—पुत्रत्वाद् बुधानन्दकृत् पक्षे पण्डितानन्दनो दानादिना । चन्द्रः । 4) प्रणतसुरेत्यत्र वसुधारेति—सुवर्णरत्नादिवृष्टिः ।

---

१ तया वैक्या A. २ मुदं A; मदं P. ३ घटवन् N. ४ नगणपञ्चकं गुरु० A. ५ परिघटित N. ६ पतति dropped in N; जगति in E

नजभजजा ल्गाववितथम् ॥ २९७ ॥

नजभजजेभ्यः परौ ल्गौ। यथा—

[1]शृणु परमोपदेशमिह मुग्धमते सततं,
भवजलधेः परेण यदि यातुमनास्त्वमसि।
विसृज परिग्रहं भज कृपां त्यज कामकथाम्,
अवितथवाग्भवापहर मा परकीयधनम् ॥ २९७.१ ॥

नर्कुटकमिति जयदेवः ॥ २९७.१ ॥

तत् कोकिलकं छचैः ॥ २९८ ॥

तदवितथं[1] छचैः सप्तभिः षड्भिश्च यतिश्चेत् कोकिलकसंज्ञम्[2]। यथा—

कलयति कोकिले मधुरपञ्चमगीतिमिमां,
मलयसमीरणो भवति पश्यत नाट्यगुरुः।
इह हि यदाज्ञया नवनवाद्भुतभङ्गिजुषः,
किसलयहस्तकान् वितनुते [2]सहकारलता ॥ २९८.१ ॥

इह केचिदष्टभिः पञ्चभिश्च यतिमिच्छन्ति ॥ २९८.१ ॥

गौ चेद्वाणिनी ॥ २९९ ॥

नजभजजेभ्यः परौ गौ चेद्वाणिनीसंज्ञम्। यथा—

[3]परभृतकूजितानि जरठेक्षुरसो नवेन्दुरु,
मलयसमीरणो मलयजं मधुसंगमश्च।
अपि न तथा हरन्ति मिलितानि मनो यथेदं,
मदभरलक्ष्मापितमहो खलु [4]वाणिनीनाम् ॥ २९९.१.१७।१४ ॥

धूर्त्यां म्रभ्या रौ काञ्ची टैः ॥ ३०० ॥

मरभयररा। टैरिति एकादशभिर्यतिः। यथा—

[5]संप्राप्तेऽस्मिन् जगच्चक्षुपि रवौ प्रत्यग्गिरेर्गह्वरं,
प्रेयःसंकेतवेश्माभिसरणे धत्से पिधानांशुकम्।
मुग्धे ध्वान्तानुरूपं किमु मुधैवौत्सुक्ययोगात् क्वणत्-,
काञ्चीमञ्जीरकोलाहलमिमं शक्ता निषेद्धुं[3] न चेत् ॥ ३००.१ ॥

वाचालकाञ्चीत्यन्ये ॥ ३००.१ ॥

भिम्भसा मणिमाला ॥ ३०१ ॥

भत्रयं मभसाश्च। टैरिति वर्तते। यथा—

---

1) शृणु परमोपेत्यत्र परेणेति अव्ययं परार्थे। अवीति—सत्यवाग्। 2) सहकारलतेति—चूतमञ्जरी। 3) परभृतेत्यत्र कोकिलजल्पितानि। कठिनेक्षुरसः। मदभरे अव्यक्तजल्पनम्। 4) मत्तच्छेकानां स्त्रीणाम्। 5) संप्राप्तेऽस्मिन्नित्यत्र पश्चिमपर्वतस्य। क्वणदिति—मेखलानूपुरयोः कलकलः।

---

१ तदवितथं dropped in P. २ कोकिलकसंज्ञं CN. ३ निरोद्धुं AP.

"देवं[1] तवारिनरेन्द्रपुरन्ध्रीनक्त्राम्बुजशशिनः,
प्रोल्लसिताधिकविस्मयमुर्वी[2] संवीक्ष्य भुजगताम्[3] ।
प्राभृतसारकृते निरवद्यामद्याप्यनवरतं,
मूर्धनि धारयते मणिमालां पातालपरिवृढः[4] ॥ ३०१.१ ॥

**मना यिः कुसुमितलतावेल्लिता ङ्चैः ॥ ३०२ ॥**

मतना यगणत्रयं च । ङ्चैरिति पञ्चभिः षड्भिश्च यतिः । यथा—

कङ्केल्लिस्कन्धे कुसुमितलतावेल्लिता मन्दमन्दं,
क्रीडादोलेयं स्मरविरचिता दाक्षिणात्यानलेन ।
अस्यां खेलन्ती रतिरतितरां इन्तं गीर्ति तनोति,
व्याकूजन्मत्तभ्रमररमणीहुंकृतीनां छलेन ॥ ३०२.१ ॥

**घछैश्चित्रलेखा ॥ ३०३ ॥**

चतुर्भिः सप्तभिश्च यतिश्चेत् सैव चित्रलेखा । यथा—

पद्मयोष्णांशोरभ्युदयमधुना सूचयन्ती पुरस्तात्,
सन्ध्या सेयं चित्रयति गगनाभोगवेश्मान्तराले ।
शङ्खच्छेदस्वच्छहैचिरुचिरानभ्रभित्तिप्रभागान्,
वर्णैः पीताताम्रशितिकपिशैस्तन्वती चित्रलेखाः ॥ ३०३.१ ॥

**मभ्ना यिश्चन्द्रलेखा ॥ ३०४ ॥**

मभना यगणत्रयं च । घछैरिति वर्तते । यथा—

"ज्वालं ज्वालं सुभग तव महान् विप्रयोगानलस्तां,
दाहं दाहं किमिव विरचयेदन्यदस्मात्परेण ।
लावं लावं विकचकमलिनीशूर्णयत्यंह्रिघातैर्,
"लेखं लेखं शकलयति तथा सा नरेश्चन्द्रलेखाम् ॥ ३०४.१ ॥

**म्भन्जभ्राश्चलम् ॥ ३०५ ॥**

मभनजभराः । घछैरिति वर्तते । यथा—

शास्त्राभ्यासे व्यसनमनुपमं परोपकृतौ रतिः,
"सत्पात्रेषु प्रणयपरतया प्रदानमनारतम्[9] ।
प्रीतिः पादाम्बुरुहि जिनपतेर्भवेदमलात्मनां,
विद्युद्दाजलधरपटलीचलात्मनि जीविते ॥ ३०५.१ ॥

---

1) देव तवारीत्यत्र रिपुनृपस्त्रीमुखाम्भोजसंकोचचन्द्रसमानस्य । 2) उर्वी पृथ्वीम् । पक्षे गुर्वीम् । 3) इस्तगतां पक्षे सर्पगताम् । 4) पातालस्वामी शेषः । 5) ज्वालंज्वालमित्यत्र वियोगाग्निः । 6) लेखं लेखं आलेख्यालेख्य । 7) सत्पात्रेष्विति—आदरतत्परतया । 8) अनेति—निरन्तरम् । 9) अमलेति—विशुद्धात्मनाम् ।

१ देवतावारिनरपु. A. २ परिवृढः A. ३ दन्तगीर्ति A. ४ इति dropped in B. ५ चूर्णयन्त्यंह्रि N. ६ सकलयति A.

**म्भौ न्यौ रौ केसरम् ॥ ३०६ ॥**

मभनयरराः । षछैरिति वर्तते । यथा—

"[1]सारंगाणां न कुलमिह न वा यूथं "[2]महादंष्ट्रिणां,
कर्णातिथ्यं न च भजति कटुगन्धद्विपानां ध्वनिः ।
तत्किं दिक्षु क्षिपसि रभसया नेत्रे त्वमुद्यत्करो,
यद्वा ज्ञातं विधुवति पवनस्त्वत्केसरं[3]" केसरिन् ॥ ३०६.१ ॥

**नौ मौ यौ चन्द्रमाला छघैः ॥ ३०७ ॥**

ननममयया: छघैरिति सप्तभिश्चतुर्भिश्च यतिः । यथा—

"[4]सरसि[१] सरसिजं तद्वाकाशे पार्वणं चन्द्रबिम्बं,
कुवलयनयने तावत्साम्यं नाभजत्त्वन्मुखस्य ।
"[5]जनयतु कनकाम्भोजश्रेणीर्लक्षशः स्वर्गसिन्धुर्-,
घटयतु यदि वा सोऽपि स्रष्टा कोटिशश्चन्द्रमालाः ॥ ३०७.१ ॥

**नौ म्तौ भ्रौ ललितम् ॥ ३०८ ॥**

ननमतभराः । छघैरिति वर्तते । यथा—

"[6]परममुपशमं धर्मीकृत्य स्थितेऽत्र महामुनौ,
प्रहरणमपरं दृष्ट्वाः किंचिन्निशातमतीव यत् ।
पशुपतिविजयं स्मारं स्मारं पराक्रमगर्वितः[३],
फलयसि ललितं पौष्पं शस्त्रं मनोभव किं मुधा ॥ ३०८.१ ॥

**भ्रनिसा भ्रमरपदं झैः ॥ ३०९ ॥**

भरौ नगणत्रयं सश्च । झैरिति नवभिर्यतिः । यथा—

वारिदमुक्तवारिभरपरिशमितघनरजा,
उद्गतरोहिणीशकरधवलितसकलककुप् ।
कस्य धृतिं ददाति न हि शरदृतुरजनिरियं,
चुम्बनलालसभ्रमरपदविदलितकुमुदा ॥ ३०९.१ ॥

**म्सौ ज्सौ त्सौ शार्दूलललितं ठैः ॥ ३१० ॥**

मसजसतसाः । ठैरिति द्वादशभिर्यतिः । यथा—

1) सारंगाणामित्यत्र हरिणानां वृन्दम् । 2) महेति—वराहादीनाम् । 3) त्वत्स्कन्धकेशाम् । 4) सरसि सरो[त्यत्र] पर्वणि भवं पार्वणं राकाजातम् । 5) आदौ जनयत्विति—तदेत्यध्याहारो विधेयः । स्वर्गेति—गङ्गा । घटेति—ब्रह्मा । 6) परममुपेत्यत्र सनाहीकृत्य । निशातं तीक्ष्णम् । ईश्वरविजयं स्मृत्वा स्मृत्वा ।

१ सरसि dropped in A. २ तीक्ष्णं O. ३ गर्वित M.

"नष्टं त्यक्तमिथःप्रतीक्षणरसैः सारंगमिथुनैर्,
यातं विस्मृतशृङ्गभारविधुरैर्गोधीणसकुलैः।
लीनं पल्वलपङ्क एव सहसा क्रोडैर्ध्वनिति चेत्,
कान्तांचाटुविधित्सयापि हि भवान् शार्दूल ललितम्॥ ३१०.१॥

**म्तन्जभ्राः कुरङ्गिका ङ्छैः॥ ३११॥**

मतनजभराः। ङ्छैरिति पञ्चभिः सप्तभिश्च यतिः। यथा–

"अस्या वक्त्रेन्दौ विजयिनि चिराय लाञ्छनवर्जिते,
प्रालेयांशो त्वं स्फुरसि दिवि धृष्ट निस्त्रपचेतनः।
साकूतालोकाद्भुतनयनकेलिनिर्जितलोचना,
याऽरण्ये तस्थावुचितचतुरेह सैव कुरङ्गिका॥ ३११.१॥

**न्सौ मौ यावनङ्गलेखा चङैः॥ ३१२॥**

नसममयया। चङैरिति षड्भिः पञ्चभिश्च यतिः। यथा–

"प्रियसखि मधुं मा स्मावज्ञासीर्मानयैनं यथावत्,
तव हि वकुले क्रीडामित्रेऽस्मिन् पुत्रके चूतवृक्षे।
भवनपरिखापद्मिन्यां सख्यां न्यस्तरोलम्बवर्णा-,
वलिकिसलयव्याजादेतेनानिन्यिरेऽनङ्गलेखाः॥ ३१२.१॥
विधुर्धप्रियेत्यन्ये। ॥ ३१२.१॥

**र्सौ जौ भ्रावुज्ज्वलं जैः॥ ३१३॥**

रसजजभराः। जैरित्यष्टभिर्यतिः। यथा–

"पाणिपादविलोचनाननपद्मकाननशालिनी,
निम्ननाभिमहाह्रदा त्रिवलीतरंगविभूषिता।

---

1) नष्टमित्यत्र त्यक्तं मिथो यत्र क्रियाविशेषणम्। विस्मृतशृङ्गभारं यथा स्यादेवं विधुरैः पीडितैः गण्डकजीवैः। क्रोडैर्वराहैः। ललितं सविलासं यथा भवति तथा। 2) अस्याः वक्त्रेन्दावित्यत्र हे प्रालेयांशो चन्द्र। रे धृष्ट त्वं अस्या वदनेन्दौ सर्वोत्कृष्टे सति कलङ्कहीने सति आकाशेऽचेतनः सन्नित्यं स्फुरसि अतो हेतोः त्वत्तः इह लोके सा कुरङ्गिकाप्युचितचतुरा या अस्याः साभिप्रायालोकनाद्भुतनयनकेल्या निर्जिते विलोचने यस्याः सा एवंविधा सती अरण्ये तिष्ठति स्म। मृगी सा पशुरपि धन्या या अरण्ये लज्जिता सती वसति। त्वं तु पशोरपि पशुः यत् निर्जितोऽपि गगने भ्रमसीति भावः। 3) प्रियसखि मधुमित्यत्र हे इष्टसखि मधुं वसन्तं मावगणय किं तु एनं मानय। अनेन हि वकुलसहकारपद्मिनीषु किसलयव्याजात् अनङ्गलेखाः आनिन्यिरे आनीताः। एको भावः। दम्पत्योर्यत्परस्परं प्रेम्णा लेखप्रेषणं सोऽनङ्गलेखः। यथाहमिह स्थितवत्यपि तावकी त्वं अपि तत्र वसन्नपि मामकः। लिखितपत्रमनङ्गरसाकुला विरहिणी प्रहिणोति पतिं प्रति। एवं पतिरपि वा दयितां प्रति प्रेषयति। 4) पाणिपादेत्यत्र त्रिवली उदरस्था वलित्रयी। चक्रवाकेति–पक्षिविशेषः।

---

१ प्रतिक्षण C. २ जातं B. ३ ध्वनिति N. ४ कांचाटु॰ N; ५ लोकाद्भुत॰ B. ६ this is found under s. 313 after the word यतिः in BCDPNP; but this is never the place where H. indicates alternative names.

कुङ्कुमारुणपीवरस्तनचक्रवाकयुगाञ्चिता,
केलिसिन्धुरिवोज्ज्वला मदनस्य राजति कामिनी ॥ ३१३.१ ॥

मालिकोत्तरमालिका चेत्यन्ये ॥ ३१३.१ ॥

**नौ रीर्निशा डैः ॥ ३१४ ॥**

नद्वयं रचतुष्टयं च। डैरिति त्रयोदशभिर्यतिः। यथा—

"मलयजरसलिप्तरम्याङ्गभाजां सिते वाससी,
शरदि हृदि च बिभ्रतीनां विशुद्धां नवैकावलीम्।
विकचकुमुदकर्णपूराञ्चितानां कुरङ्गीदृशां,
हिमरुचिकिरणावदाताभिसर्तुं निशा प्रेयसी ॥ ३१४.१ ॥

तारकेत्यन्ये ॥ ३१४.१ ॥

**नौ सौ त्यौ पङ्कजवक्त्रा घङ्कैः ॥ ३१५ ॥**

ननससतयाः। घङ्कैरिति चतुर्भिर्नवभिश्च यतिः। यथा—

"इह किमु विलसति सर्वऋतुश्रीः किं नु मृगाक्षी,
बहुजनजडिमविजृम्भणहेतुः कुन्दरदा या।
अभिनवमृदुतरपल्लवपाणिः संभृततृष्णा,
समुदितनिबिडपयोधरभारा पङ्कजवक्त्रा ॥ ३१५.१ ॥

**स्जजभ्साः सुरभिर्स्त्रिडैः ॥ ३१६ ॥**

सनजनभसाः। त्रिडैरिति त्रीन् वारान् पञ्चभिर्यतिः। पञ्चभिः पञ्चभिः पञ्चभिश्च यतिरित्यर्थः। यथा—

"स्फुटदुज्ज्वलबकुलाकुलमधुपावलिरसितैः,
पवनाहतलवलीदलपटलैरतिचपलैः।
मदने प्रियसुहृदि प्रतिभुवनं कृतविजये,
"सुरभिर्ध्रुवमिह गायति परिनृत्यति मुदितः ॥ ३१६.१ ॥

**य्मौ न्सौ त्सौ क्रीडा चचैः ॥ ३१७ ॥**

यमनसतसाः। चचैरिति षड्भिः षड्भिर्यतिः। यथा—

1) मलय[ज]रसेत्यत्र कर्णपूरेति—कर्णाभरणम्। कुरङ्गीदृशां स्त्रीणाम्। 2) इह किमु विलसतीत्यत्र हेमन्ते शीतेन जाड्यं भवति। स्त्रीपक्षे जनाकृस्यम्। शिशिरे कुन्दाः पुष्पन्ति। वसन्ते पल्लवाः निष्पद्यन्ते। ग्रीष्मे तृष्णा भवति पक्षेऽभिलाषः। प्रावृषि पयोधरा मेघाः पक्षे स्तनौ। शरदि कमलानि विकसन्ति पक्षे वदनसरोरुहभिः भाजः। 3) स्फुटदुज्ज्वलेत्यत्र मदने कामे। 4) सुरभिर्वसन्तः।

१ चेत्यन्ये B; मालिकाव्यन्ये A. २ ।६ तु A. ३ कुन्दरदाया A. ४ निवि. ए.A. ५ त्रिडैरिति A.

[1]यदि प्राप्तो बन्धं यदि विरहितो विन्ध्याचलभुवा,
वियुक्तः कान्ताभिर्यदि च तदपि सम्बेरमपते ।
नरेन्द्रस्ते पूजां रचयति सदा किं चैष भवता,
रणक्रीडामैत्रीं घटयति ततो मा गाः शुचमिमाम् ॥ ३१७.१ ॥

[2]न्सौ म्तौ भ्रौ हरिणीपदं चर्चैः ॥ ३१८ ॥

नसमतभराः । चर्चैरिति षड्भिश्चतुर्भिश्च यतिः । यथा–

[2]अधिगुणधनुर्दण्डं पश्यंल्लुब्धकं गहने वने,
सरभसमपक्रमन्न्यङ्कुश्चिन्तयन्निति [3]ताम्यति ।
सरसमधुरोद्गारैर्गीतैर्वागुराभिरिव प्रिया-,
[4]उद्वह निगडिता दत्ते नैषा सांप्रतं हरिणी पदम् ॥ ३१८.१ ॥

भीन्या भङ्गिः ॥ ३१९ ॥

भगणचतुष्टयं नयौ च । यथा–

मा कुरु संपदि संमदमापदि विसृज विषादं,
दीनजनेषु कृपां कुरु संस्मर चिरपुरुषाणाम् ।
संत्यज पापचरित्रमुदस्य सुचरितमालाम्,
अद्भुतभङ्गिरियं पुरुषोत्तमसरणिरनिन्द्या ॥ ३१९.१ ॥

विच्छित्तिरिति कश्चित् ॥ ३१९.१ ॥

स्जौ स्जौ त्रौ बुद्बुदम् ॥ ३२० ॥

सजसजतराः । यथा–

[5]असमं दधन्नयपयो गभीरमध्यः सनातनो,
विमलो जयत्यविरतं जिनेन्द्रसिद्धान्तवारिधिः ।
अतिपेशलैर्गम[6]गणैस्तरंगिते यत्र सर्वदा,
क्षणदृष्टनष्टतनुभिः कुदृष्टिभिर्बुद्बुदायितम् ॥ ३२०.१ ॥

अतिधृत्यां म्सौ ज्सौ तौ गः शार्दूलविक्रीडितं ठैः[3] ॥ ३२१ ॥

मसजसततगाः । ठैरिति द्वादशभिर्यतिः । यथा–

[7]क्ष्माभृत्पुंगव कोशकन्दरमुखान्निर्गत्य ते संगर-,
क्रीडासून्मदवैरिवारणघटाकुम्भस्थलीः पाटयन् ।

1) यदि प्राप्त इत्यत्र सम्बेरमेति–हे हस्तिपते । भवता पूजा संपाद्यते । एतेन उक्तिद्वयेन गजस्य महत्त्वमारोप्यते । 2) अधिगुणेत्यत्र गुणमधिरूढो धनुर्दण्डो यस्येति तं व्याधं न्यङ्कुर्हरिणः । 3) खेदं करोति । 4) उद्वहयेति–पुष्टिं नय । सरणिर्मार्गः । संपदि आनन्दो न क्रियते विपदि विषादो नेत्यादिलक्षणा अद्भुता । 5) असममित्यत्र असाधारणत्वम् । नया नैगमाद्यास्तद्रूपं पयस्तेन गभीरं गम्भीरं मध्यं मध्यप्रदेशो यस्येति । नित्यस्थितिभागपेक्षया । 6) सदृशपाठसमूहैः । पूर्वं दृष्टाः पश्चान्नष्टाः दृष्टनष्टास्तैरिति क्षणक्षय-वादिभिः स्यासकायितम् । 7) क्ष्माभृत् इत्यत्र राजानः पक्षे पर्वताः तेषु पुंगवो मुख्यः ।

१ शुचिमिमां D; शुभमिमां N. २ sūtras 318-323 dropped in H. ३ ठैरिति N.

दंष्ट्रालो नवलग्नमौक्तिकमणिस्तोमैरसृग्लेखया,
जिह्वालः करवाल एष तनुते शार्दूलविक्रीडितम् ॥ ३२१.१ ॥

**म्सौ ज्सौ न्जौ गो वायुवेगा ॥ ३२२ ॥**

मसजसनजगाः । [१]ठैरिति वर्तते । यथा—

"[1]त्यक्त्वा पुत्रकलत्र[२]बन्धुसुहृदां व्यतिकरमञ्जसा,
नित्यं संसार वीतरागचरणाम्बुरुहयुगं "[2]रहः ।
हंहो चित्त चिरं प्रसीद किमिदं न हि हतजीवितं,
जानीषे घनवायुवेगनिहताभ्रपटलगत्वरम्" ॥ ३२२.१ ॥

**य्मौ न्सौ रौ गो मेघविस्फूर्जिता चचैः ॥ ३२३ ॥**

यमनसररगाः । चचैरिति षड्भिः षड्भिश्च यतिः । यथा—

"[4]निरुन्धानस्तापं जगति कलयंश्चण्डकोदण्डदण्डं,
पदं व्यातन्वानः सततमखिलक्ष्माभृतां चोपरिष्टात् ।
निकामं दुर्धर्षो दिशि दिशि समुल्लासयन् वाहिनीश्च,
त्वमुर्वीशौलुक्येश्वर घटयसे मेघविस्फूर्जितानि ॥ ३२३.१ ॥

रम्भेति स्वयंभूः ॥ ३२३.१ ॥

**य्मौ न्सौ जौ गो मकरन्दिका ॥ ३२४ ॥**

यमनसजजगाः । चचैरिति वर्तते । यथा—

इमां बालां त्रासाकुलमृगवधूविलोलविलोचनां,
किमु त्वं निःशङ्को व्यथयसि मुहुर्वियातविचेष्टितैः[5] ।
"[6]परिक्षोदं चण्डैर्मुसलपरिघैः सहेत न मालती,
मृदुभ्राम्यद्भृङ्गीपदपरिचयाद्गलन्मकरन्दिका ॥ ३२४.१ ॥

**य्मौ न्सौ तौ गश्छाया ॥ ३२५ ॥**

यमनसततगाः । चचैरिति वर्तते । यथा—

"[7]फलं कालाक्रान्तं कुसुममरसं पत्रं न भोगास्पदं,
बहिस्तत्का[३]र्कश्यं किमपि सहजं निःसारमन्तर्वपुः ।

1) त्यक्त्वा पुत्रेत्यत्र मित्राणां संबन्धम् । 2) रहः एकान्ते वनमध्ये इत्यर्थः । 3) मेघसमूहवत् गत्वरं विनाशि । 4) निरुन्धानस्तापमित्यत्र जलदविचेष्टितानि । यथा मेघो हि तापं निरुणद्धि अयमपि अन्येषां राज्ञाम् । खड्गं पक्षे इन्द्रधनुः । क्ष्माभृत् राजा पर्वतश्च । वाहिनी कटकं नदी वा । 5) इमां बालामित्यत्र धृष्टविचेष्टितैः । 6) चूर्णभावम् । 7) फलं कालाक्रान्तमित्यत्र हे बाल तव फलं कालदोषदूषितं धिक् । नीरसं कुसुमं धिक् । न भोगयुक्तं पत्रं धिक् । बहिस्तात् प्रसिद्धं कार्कश्यगुणं प्रकृतिभवं धिक् । अन्तर्मध्ये निःसारगुणं धिग् विरूढं ।

१ ठैरिति N. २ बन्धुकलत्रपुत्र A. ३ कार्कश्ये N.
१० छन्दो०

विशुद्धिं गृध्राणां धिगुपकरणं शाखाप्रपञ्चो न ते,
किमन्यत्ताल स्याद्विरलविरला छायापि नो शीतला ॥ ३२५.१ ॥

**त्रिर् ज्सौ गो रतिलीला ॥ ३२६ ॥**

त्रीन् वारान् जगणसगणौ गुरुश्च । जसजसजसगाः । चचैरित्यनुवर्तते । यथा –

दुनोति यत तां कराम्बुजतले निवेशितकपोलां,
किमप्यहरहस्तथा कथमपि त्वदीयविरहाग्निः ।
यथा परततुर्न पङ्कजदलैर्न मौक्तिककलापैर्,
न चन्दनरसैर्न चन्द्रकिरणैः करोति [1]रतिलीलाम् ॥ ३२६.१ ॥

**म्तौ न्सौ रौ गः पुष्पदाम ङ्छैः ॥ ३२७ ॥**

मतनसररगाः । ङ्छैरिति पञ्चभिः सप्तभिश्च यतिः । यथा –

सेयं साकाङ्क्षा त्वयि मृगनयना [2]संगताङ्गी विलासैर्,
लीलालोलभ्रूर्दिवि कमलवनं कुर्वती नेत्रपातैः ।
हंहो पश्यैतद्विरहविधुरया ते यया [3]सावहित्थं,
प्रक्षिप्तं कण्ठे विकसितबकुलासूत्रितं पुष्पदाम ॥ ३२७.१ ॥

**म्तौ न्सौ तौ गो वञ्चितम् ॥ ३२८ ॥**

मतनसततगाः । ङ्छैरिति वर्तते । यथा –

[4]कैश्चिन्नावांकैरविदितसुकृतैः शङ्काविमुक्तात्मभिः,
कौलीभूयान्यैर्विहितपशुगणाघातैः [१]पैरैर्यज्वभिः ।
जैने धर्मेऽस्मिन् सति सततकृपापीयूषपात्रेऽप्यहो,
स्वच्छन्दं धूर्तैरहह कुटिलया बुद्ध्या जगद् वञ्चितम् ॥ ३२८.१ ॥

[२]विस्मितमित्यन्यः ॥ ३२८.१ ॥

**य्मौ नौ रौ गो मुग्धकं चछैः ॥ ३२९ ॥**

यमननररगाः । चछैरिति षड्भिः सप्तभिश्च यतिः । यथा –

परि[३]भ्राम्यद्भृङ्गं श्वसितपरिमलैर्जपापाटलोष्ठं[5],
गिरा लीलालापप्रणयमधुरया सदानन्ददायि ।
स्मरत्यन्तश्चित्तं[6] लिखितमिव सखे ममाद्यापि तस्याः,
[7]प्ररूढप्रेमायाश्चकितमृगदृशो मुखं मुग्धकं तत् ॥ ३२९.१ ॥

---

1) रतिलीलां स्वास्थ्यम् । 2) सेयं सा इत्यत्र शोभिताङ्गी । 3) अङ्गमोटनादिभिः आकारगोपनसहितम् । 4) कैश्चिदित्यत्र नास्तिकैरज्ञातपुण्यैः दयाहीनात्मभिः । कौलीभूयेति – तापसीभूय । अन्यैर्योगिभिः । 5) परिभ्राम्यदित्यत्र जपापाटलवद् रक्तोष्ठम् । 6) चित्तस्यान्तः अन्तश्चित्तम् । 7) उत्पन्नरागायाः । मुग्धकं मनोहरम् ।

---

१ पदैर्य० N. २ विम्वितं A, विचितं N. ३ भ्राम्यद्भृङ्गं N.

**रः सौ तो जौ ग ऊर्जितं जैः ॥ ३३० ॥**

रससतजजगाः । जैरिति दशभिर्यतिः । यथा–

नेक्षसे किमहो "जलरिक्तां स्वामपि तावदिमां तनूं,
नो निषेधसि चण्डमरीचेर्दुःसहमातपजृम्भितम्[2]" ।
शारदे समयेऽपि वदस्मिन् पूरितपर्वतकन्दरा-,
स्फूर्जितस्तनितानि दधानस्तोयद किं न हि लज्जसे ॥ ३३०.१ ॥

**नभ्रसा जौ गस्तरलम् ॥ ३३१ ॥**

नभरसजजगाः । यथा–

श्रय विशुद्धधिया जिनेश्वरपादपङ्कजभृङ्गतां[3],
प्रकटय "प्रशमं भजस्व गुरूनधीष्व सदागमम् ।
विरचयार्थिजनं कृतार्थमिमं कुरुष्व तपः परं,
तरलमायुरिदं गृहाण वदीयमेतदहो फलम् ॥ ३३१.१ ॥

**म्रौ भः सौ ज्गौ माधवीलता छैः ॥ ३३२ ॥**

मरभससजगाः । छैरिति सप्तभिर्यतिः । यथा–

निःसामान्यं तवैतत् किमपि विराजति दक्षिणानिल,
"प्रावीण्यं यत्प्रगल्भामिह सहकारलतामनुव्रजन् ।
अश्रान्तं साभिलापः स्पृशसि समुन्नयसे विधूनय-,
स्यालिङ्गस्याशु चुम्बस्यभिनवकोमलमाधवीलताम् ॥ ३३२.१ ॥

**सूगौ तरुणीवदनेन्दुः ॥ ३३३ ॥**

सगणाः षट् गुरुश्च । यथा–

मृगनाभिविनिर्मितपत्रलतावलिलाञ्छनधारी,
जननेत्रचकोरमहोत्सवकृत्कमलद्युतिहारी ।
जगतां विजयाय निबद्धमतौ "झषलक्ष्मणि सैषो,
जयति प्रतिपन्नसहायपदस्तरुणीवदनेन्दुः ॥ ३३३.१ ॥ १९।१३ ॥

**कृतौ म्रौ भ्नौ य्भौ ल्गौ सुवदना छैः ॥ ३३४ ॥**

मरभनयभलगाः । छैरिति सप्तभिः सप्तभिर्यतिः । यथा–

1) नेक्षसे इत्यत्र जलशून्याम् । 2) आतपविलसितम् । 3) श्रय विशुद्धेत्यत्र भ्रमरत्वम् । 4) उपशमभावम् । 5) निःसामान्यमित्यत्र प्रवीणस्य भावः प्रावीण्यम् । 6) झषलक्ष्मणि कन्दर्पे ।

१ विनिर्मित पत्र० P. २ सोषा P.

"आकल्पं कल्पयित्वाभिनवमृगमदैरामुच्य" चैं क्षिति-,
क्षौमे कृत्वा विभूषां मरकतमणिभिर्गन्तुं प्रियगृहम्।
औत्सुक्याद्यावदस्थात् पथि "मुखशशिना तावद्धवतमी,
ज्योत्स्नी जातेति मूर्च्छामभजत सहसा कष्टं सुवदना ॥ ३३४.१ ॥

**दशग्लौ वृत्तम् ॥ ३३५ ॥**

गुरुलघू दशवारानावृत्तौ वृत्तं नाम वृत्तम्। यथा–

"प्रीणिताखिलार्थिदानमूर्जितारिजिष्णुपौरुषं महर्षि-,
चित्तकुञ्चितेन्द्रियत्वमेवमद्भुतान् गुणान् दधन्नरेन्द्र।
रामपार्थधुन्धुमारमुख्यपूर्वभूमिपालवृत्तमत्र,
सत्यतां चिराय नीतवानसि त्वमुग्रकेश्रुलुक्यचन्द्र ॥ ३३५.१ ॥

**स्भौ नौ म्यौ ल्गौ मत्तेभविक्रीडितं डैः ॥ ३३६ ॥**

सभरनमयलगाः। डैरिति त्रयोदशभिर्यतिः। यथा–

उदयाद्रेः प्रसरन्नयं दिनपतिः प्रत्यग्रसन्ध्यातप-,
स्फुटसिन्दूररुचिर्विसूत्रित"-तमःसंदोहपल्लीयतः।
तनुते "वाजिजयोल्लसत्कशपुरःकामत्सुपर्णाग्रज-,
प्रतिकारोपरिविलासायतकरो मत्तेभविक्रीडितम् ॥ ३३६.१ ॥

**नो भौ मः सौ ल्गौ मुद्रा टैः ॥ ३३७ ॥**

नभभमससलगाः। टैरिति एकादशाभिर्यतिः। यथा–

अयमरण्यमहीष्वपि चूतास्वादकषायितकोकिला-,
कलकलच्छलतश्चिरमाज्ञामत्रालिवामिह "वर्तयन्।
कुपितमानवतीकलहानामन्तकरः पुरतः सखे,
"मकरकेतुमहीपतिमुद्राव्यापरणं तनुते मधुः ॥ ३३७.१ ॥

उज्ज्वलमित्यन्ये ॥ ३३७.१ ॥

**य्मौ नौ तौ गौ शोभा चछैः ॥ ३३८ ॥**

यमननततगगाः। चछैरिति षड्भिः सप्तभिश्च यतिः। यथा–

---

1) आकल्पं वेषं रचयित्वा। 2) आमुच्येति–परिधाय। 3) त्वमुखप्रभाभिः भूदेशे उद्योतिते परलोकनाज्जातलज्जया गन्तुमशक्तेति भावः। 4) विसूत्रितेति–विनाशिता। 5) वाजिजयेति–वाजिजवाय वेगाय उल्लसन्ती कशा तर्जको यस्य स चासौ कामदस्त्वसारथिरुपरिष्टाद् यत्नादायतभुजः। 6) अयमरण्येत्यत्र वर्तयन् प्रवर्तयन्। 7) कामकहीनामधानपदं व्याप्ताज्ञापनमिति यावत्।

---

१ क्षितिं क्षौमे N. २ तावद्धततनी ADEN. ३ दशल्गा F. दसला G; ४ प्राणिता N. ५ तपः स्फुट॰ A. ६ कशपुरः B. ७ यत्नादायत॰ N. ८ मुद्राव्यापरणं N.

[1]गता लाक्षारागद्युतिरधरदलात्पत्रवल्ली विलुप्ता,
कपोले पर्यस्तं तिलकमलिकतो लम्बितः केशपाशः ।
च्युतः कर्णोत्तंसः करमणिवलयं स्रस्तमस्यास्तथापि,
प्रियेण [2]प्रत्यग्रः प्रथयति महतीं संगमो हन्त शोभाम् ॥ ३३८.१ ॥

**म्रौ भ्रौ तौ गौ चित्रमाला छचैः ॥ ३३९ ॥**

मरभनततगगाः । छचैरिति सप्तभिः षड्भिश्च यतिः । यथा—

[3]सा कान्तुत्यन्यमेवायमपि यत तां सारसौन्दर्यलक्ष्मीर्-,
एषा चैतं वराकी तरुणनिवहोऽमूं च लावण्यपुण्याम् ।
एवं प्रत्यग्रकेलीकुशलललितैर्बद्धहासं वसन्ते,
देवः पुष्पायुधोऽसौ रमयति रतिं दर्शयंश्चित्रमालाम्[4] ॥ ३३९.१ ॥
सुप्रमेत्यन्यः ॥ ३३९.१ ॥

**म्नौ स्नौ म्यौ ल्गौ सद्रत्नमाला ङ्जैः ॥ ३४० ॥**

मनसनमयलगाः । ङ्जैरिति पञ्चभिरष्टभिश्च यतिः । यथा—

सन्ध्यान्ते प्रतिदिशमियं समुदिता ताराततिः शोभते,
[5]श्यामाया अभिसरणकेलिरभसाद्भ्रष्टेव मुक्तावलिः ।
यद्वा व्योमनि मनसिजेन लिखिता जैत्रप्रशस्तिर्निजा,
विस्फूर्जद्घनतमतमिस्रफणिनां सद्रत्नमालाथवा ॥ ३४०.१ ॥

**भीरसल्गा नन्दकम् ॥ ३४१ ॥**

भगणचतुष्टयं रसलगाश्च । यथा—

[6]अद्भुतसंगरसागरमन्थनसंभवां कलयन् श्रियं,
दोष्णि दधद्वसुधावलयं च कुमारपालमहीपते ।
त्वं बलिराजनिबर्हणविश्रुतविक्रमः पुरुषोत्तमः,
केवलमेष जगद्विजयी त्वदसिर्द्विषां न तु [7]नन्दकः ॥ ३४१.१ ॥

---

1) गता लाक्षेति—चुम्बनेनेति शेषः । विलुप्तेति—अङ्गमर्दनेनेति । 2) प्रत्यग्रो नवीनः कथयति । 3) सा कान्तुत्यन्यमेवेत्यत्र सा नारी अन्यं पुरुषं कामयति । स तु पुमान् तां दयिताम् । पुनः एषा सारसौन्दर्यलक्ष्मीर्वराकी सती एनं प्रत्यक्षदृष्टं पुमांसम् । तरुणपुरुषनिवहः अमुं लावण्यपुण्यां एवंविधां अभिलषति । एवं नूतनकेलिनिपुणविलासैः बद्धहासं यथा भवति तथा कामः रतिं दयितां रमयति । 4) आश्चर्यमालां अनया रीत्या वसन्ते दर्शयन्नित्यर्थः । 5) सन्ध्यान्ते प्रतिदिशमित्यत्र श्यामाया षोडशवर्षदेशीया कामिनी तस्याः । 6) अद्भुतेत्यत्र संग्रामसमुद्रमथनोद्भवाम् । 7) नन्दको हर्षकरः । पक्षे विष्णोः खड्गस्य नन्दक इति नाम । यदाहुः—खड्गोऽस्य पाञ्चजन्योऽब्जः श्रीवत्सोऽसिस्तु नन्दक इति ।

---

१ छैः O. २ चैतं वराश A; चैरं वराकी E. ३ रत्नमाला FGH. ४ तनतमिस DNP.

**भ्रौ न्भौ भ्रौ ल्गौ कामलता ॥ ३४२ ॥**

भरनभभरलगाः। यथा–

कौतुकमात्रमेव भवतो यदि शस्त्रपरिग्रहे तदा,
चापशिलीमुखान् घटयितुं कुरु चूतदलावमोटनम्।
कस्य मनः करोति न हि वश्यमसौ पुरतो यतः स्फुरन्,
काम लतावलीवलनो मलयानिल एष ते सखा ॥ ३४२.१ ॥

उत्पलमालिकेत्यन्ये ॥ ३४२.१ ॥

**भ्रौ य्नौ न्रौ ल्गौ दीपिकाशिखा गचैः ॥ ३४३ ॥**

भनयननरलगाः। गचैरिति त्रिभिः षड्भिश्च यतिः। यथा–

प्राक्तने[१]सुकृतसमूहे [1]चलवदिह समुल्लसत्यपि,
[2]दुर्नयकरणमनीषा श्रियमपहरति क्षणान्नृणाम्।
पश्यत यदनुपभुक्तेऽपि हि विनिहिततैलपूरणे,
निर्भरच[२]लितसमीरो [3]दलयति खलु दीपिकाशिखाम् ॥ ३४३.१ ॥

**त्भौ ज्भौ ज्भौ ल्गौ शशाङ्करचितम् ॥ ३४४ ॥**

तभजभजभलगाः। यथा–

त्वं निर्जितोऽसि निरवद्यया [4]वरतनोर्मुखाम्बुजरुचा,
विस्तीर्णनेत्रललितैः कुरङ्गहतकोऽयमप्यवजितः।
युक्तं शशाङ्क रचितं त्वया [5]यदमुना सहैक्यमधुना,
संगः समानगुणयोगिभि[6]र्भवति देहिनां [7]समुचितः ॥ ३४४.१ ॥ २०।११

**प्रकृतौ म्रौ भ्नौ यिः स्रग्धरा छछैः ॥ ३४५ ॥**

मरभना यगणत्रयं च। छछैरिति सप्तभिः सप्तभिर्यतिः। यथा–

आवासः पर्णशाला वपुषि च वसनं नूतना त्वक्तरूणां,
पाणावापादयष्टिः[8] शिरसि च चिकुरैर्नव्यगुम्फो जटानाम्।
कर्णेऽक्षस्रग्[9] धरायाः परिवृढ[10] विपिने त्वद्भयात् संप्रतीत्थं,
वृत्तिर्द्विड्विरहोभिस्त्वदरिनृपजनैः शिक्षिता तापसानाम् ॥ ३४५.१ ॥

---

1) प्राक्तनेत्यत्र चलवत्सुपुरित्यर्थेऽव्ययम्। 2) दुःखं नयन्ति इति दुर्नयानि तानि करणानि कार्याणि तेषामिच्छा। 3) स्फोटयति। 4) त्वं निर्जितो[सि] निरत्यत्र कामेन्द्राः। 5) अमुना मृगेण। ऐक्यं मैत्र्यम्। 6) पुरुषैः। 7) समुचितो योग्यः। 8) आवास इत्यत्र आपादो मतिनां दण्डः। 9) अक्षस्रग् अक्षमाला। 10) पृथ्व्याः स्वामिन्।

---

१ प्राक्तने N. २ वलित॰ N.

भौ भौ ज्भौ रः कथागतिः[1] ॥ ३४६ ॥

तरभनजभराः। छ्छैरिति यतिः। यथा–

[1]केष्वप्यखर्वगर्वोद्धिधुरितभुवनेष्वनर्गलगर्जितेर्,
अम्भोधरेष्विवाशु श्रवणपथगतेष्वभूद्विनिमीलितम्।
[2]आखण्डलस्य कामप्यभजत नयनासितोत्पलकाननं,
प्रीतिं चुलुक्यचन्द्र प्रकृतनृपकथागते त्वयि तु क्षणात् ॥ ३४६.१ ॥

भौ भौ भौ रो ललितविक्रमो ञैः[2] ॥ ३४७ ॥

भरनरनरराः। ञैरिति दशभिर्यतिः। यथा–

सद्गुणरत्नरोहणगिरे यशोधवलिताखिलाशामुख,
द्वेषिवधूमुखाम्बुजविधो वयं किमिव वर्णयामस्तव।
यस्य यशोंऽवदत्रिभुवनश्चिरं विबुधसुन्दरीमण्डलैर्,
जम्भरिपोश्चमत्कृतिरसं दधल्ललितविक्रमो गीयते ॥ ३४७.१ ॥

मौ तनिसा मत्तक्रीडा जङैः ॥ ३४८ ॥

मद्वयं तगणो नत्रयं सश्च। जङैरिति अष्टभिः पञ्चभिश्च यतिः। यथा–

नो जानीते कलाकलं विलुठति च [3]धरणितलशयने,
भूयो भूयो मूर्च्छां धत्ते द्रढयति न शिथिलमपि वसनम्।
[4]अर्थापेतं निःसंबन्धं वचनमपि वदति सदतितरां,
मत्तक्रीडामाप्ता[5] बाला सुभग तव [6]नवविरहविधुरा ॥ ३४८.१ ॥

रजतनिसाश्चन्दनप्रकृतिः ॥ ३४९ ॥

रजता नत्रयं सश्च। यथा–

दर्शनाद्यदीह संतापमपहरति तदपि बत [7]तया,
नार्जितं धनं प्रभूतं जरसि सुखदमतिसरलतया।
किं [illegible] चन्दनप्रकृत्या सखि सततमपि फलरहितया,
[8]दुर्भुजंगघृष्टया यौवनमिदमफलमहह गमितम् ॥ ३४९.१ ॥

---

1) केष्वप्यखर्वे [ति]–केष्वपि भूपालेषु। [illegible]) इन्द्रस्य सहस्रनेत्रकमलवनं त्वत्कथाश्रवणेन प्रीतिं प्राप यत्पूर्वमन्येषां दुर्दान्तराज्ञां कथाश्रवणेन मीलितं समभूत्। मेघगर्जितवत्। 3) नो जानीते इत्यत्र धरणीतलमेव शयनं यस्येति। 4) अर्थरहितमाकाङ्क्षादीनम्। 5) आप्ता प्राप्ता। 6) नवीनविरहपीडिता। 7) दर्शनाद्यदीत्यत्र तयेति–प्रकृत्या। 8) दुष्टभुजंगघृष्टतया यथा दुष्टभुजंगः घर्षणेन फलं नार्पयति।

---

१ छ्छैः added in GH. २ ललिता॰ O; sūtras 347-362 dropped in H. ३ दधति N. ४ घृष्टया P.

**न्जभजिराः सिद्धिः ॥ ३५० ॥**

नजभा जत्रयं रश्च । यथा—

सवनमत्पुरंदरशिरःशुचिरत्नकिरीटमालिका,
विमलमयूखशेखरितपादनखद्युतिजालशालिनम् ।
विपुलदयानिधिं [1]प्रणयिकल्पतरुं भजत जिनेश्वरं,
यदि [2]भवकातरस्त्वमिह वाञ्छसि सिद्धिमनुत्तमां सखे ॥ ३५०.१ ॥

*चित्रलता, रुचिरा, शशिवदना चेत्यन्ये ॥ ३५०.१ ॥*

**नजौभ्रा वनमञ्जरी ॥ ३५१ ॥**

नगणो जगणचतुष्टयं भरौ च । यथा—

सह धनुषा समदो मदनः किल [3]शीतदीधितिमौलिना,
सुहृदिह भस्म कृतस्तव [4]दीप्तहुताशपिङ्गलया दृशा ।
इति हि मधो कुमते स्मर मा विचराग्निके तरलभ्रुवां,
विरहजुषां सकलज्वलिताङ्गभुवां दधद् वनमञ्जरीः ॥ ३५१.१ ॥

**त्री र्नौ रस्तरंगः ॥ ३५२ ॥**

रनरनरनराः । यथा—

निर्ममो भव विधेहि पञ्चपरमेष्ठिसंस्मरणमन्वहं,
संयमं कुरु भज क्षमां यदि समीहसे [5]सुखमनश्वरम् ।
यौवनं किल तडिल्लताचपलमभ्रचञ्चलमिदं धनं,
जीवितव्यमपि मारुताहतसरित्तरंगतरलं सखे ॥ ३५२.१ ॥ २१।८ ॥

**आकृतौ भ्रौ त्रौ त्रौ न्गौ मद्रकं ग्रैः ॥ ३५३ ॥**

भरनरनरनगाः । ग्रैरिति दशभिर्यतिः । यथा—

देव जगत्रयैकतिलक प्रभो [6]प्रणयिलोककल्पविटपिन्,
पुण्यवतां [7]शिरोमणिपदव्यभाजि जिननाथ तैरिह जनैः ।
ये विकचेश्चिराय चरणारविन्दयुगमर्चयन्ति कुसुमैर्,
मद्रकमन्दगीतिभिरभिष्टुवन्ति च चरित्रमत्रभवतः ॥ ३५३.१ ॥

---

1) सवनमदित्यत्र प्रणयिनो भक्ताः । 2) भवात्संसाराद् कातरो भीतः । 3) सह धनुषेत्यत्र शीतदीधितीति-ईश्वरेण । 4) दीप्तेति-तृतीयलोचनेन । को भावः ? कन्दर्पो हि धनुषा पञ्चमान् तद्धनुः शकलीकृतं स च विनाशितश्च । त्वं च तस्य मित्रम् । यदि ईश्वरेणैकेन लोचनेन प्रज्वालितः । स चासां स्त्रीणां विरहयोगात् [अङ्गं] दाहानुपकनश एव त्वामपि मित्रक्लाभावात् भस्मीकरिष्यतीति भावः । 5) अनश्वरं अविनाशि । 6) देव जगत्त्रयैकेत्यत्र भक्तभावि[क]ल्पपादप । 7) शिरोमणि० मुकुटभावं व्यभाजि धृतम् ।

---

१ जगणत्रयं GNP. २ वनमंजरीः N. ३ अनघिरं A. ४ पदं व्यभाजि NEP. ५ कुसुमन० A.

**स्तौ त्नौ स्त्रौ गौ महास्रग्धरा जछैः ॥ ३५४ ॥**

सततनसररगाः। जछैरिति अष्टभिः सप्तभिश्च यतिः। यथा—

"अभि नागान्याति योऽयं स मम मम पुनर्यच्छिरो" हुकरोति,
प्रचैलोऽयं "यत्कबन्धः प्रहरति स तु मे प्राणनाथोऽस्तु सख्यः।
दलयन् यो दुष्टभूपानहमहमिकया स्वर्गसीमन्तिनीना,
परिशुश्रावेति वाचो वरवरणमहास्रग्धराणां रणेषु ॥ ३५४.१ ॥

**भृगौ मदिरा ॥ ३५५ ॥**

भृगाविति भगणसप्तकं गुरुश्च। यथा—

ह्रीविनियन्त्रणविभ्रमपाकुरुतेऽभिनवायतरुद्वयसां,
प्रौढपुरन्ध्रिजनस्य यथा तिरयत्यपराधपदं सहसा।
कोपपदेन च गोत्रपरिस्खलितं न च कारयते वदसौ,
कामसखी मदिरेह "सतर्पमभाजि चिरं किल कामिजनैः ॥ ३५५.१ ॥
लताकुसुममित्यन्ये ॥ ३५५.२ ॥

**मत्यनीगा वरतनुः ॥ ३५६ ॥**

मतया नगणचतुष्टयं गुरुश्च। यथा—

"चक्षु सौन्दर्यं मृगशिश्वां परभृतयुवतिषु मधुरगिरं,
यातं हंसीषु स्मितमुद्दुद्भवविचकिलकुसुमसंतिषु।
रोलम्बश्रेण्यां कचलक्ष्मीं वदनरुचिमपि विकचकमले,
न्यासं कृत्वा सा खलु याता क्वचिदपि मम वरतनुरधुना ॥ ३५६.१ ॥

**म्सौ ज्सौ ज्सौ ज्गौ दीर्घार्चिष्टैः ॥ ३५७ ॥**

मसजसजसजगाः। टैरिति द्वादशभिर्यतिः। यथा—

प्रायो दुष्कृतकर्मसु स्वयममी प्रयान्ति पिशुनाः सहायतां,
यद्वत्तद्वदनिन्दनीयसुकृतक्रियासु भृशमन्तरायताम्।
वह्नी सततजन्तुसङ्कुलमहावनप्लुषि सरसा समीरणो,
दीपार्चिष्यखिलोपकारिणि भवत्यकाण्डशमितान्तकः खलु ॥ ३५७.१ ॥
२३।५ ॥

**विकृतौ न्जौ भ्जौ भ्जौ भ्लौ गोऽश्वललितं दैः ॥ ३५८ ॥**

नजभजभजभलगाः। दैरित्येकादशभिर्यतिः। यथा—

1) अभिनागानित्यत्र नागान् हस्तिनोऽभि। समराङ्गणे युध्यमानेषु भटेषु सुराङ्गनानां परस्परं वचनप्रपञ्चः। 2) यस्य शिरः छिन्नम्। 3) मस्तकहीनं वपुः कबन्धः। 4) सतर्पमिति—सतृष्णम्। 5) चक्षुःसौन्दर्यमित्यत्र मृतभार्यः पुमान् कश्चित् प्रति वक्ति मम कान्ता एतानि वस्तूनि [illegible] मुक्त्वा गता।

१ one म dropped in ५. २ प्रचटोप ABP; प्रभोर्य B. ३ हसीषु N. ४ कुसुमगविषु N. ५ जगौ N. ६ दीपार्चिः ठै ५. [illegible] अश्व ललित N.
११ छन्दो०

निपतन्नभिहन्तुमनान्यपरानदुर्निरीक्ष्यमतुलं,
निरभिमन्त्रको प्रत्यर्थ्यनुविरिधनत्रानुकूलम् ।
नवघनचतुष्पेक्षण इनं विरच नतुभूतमपि पटहन्-,
परतः रिन्द्रियार्थैरलमिति विहृष्ट" इद वचनमाभिरतवति ॥ ३५८.१ ॥

अत्र केचित्सप्तमभगणस्थाने जगणमिच्छन्ति ॥ ३५८.१ ॥

मौ तौ नौल्गा मत्ताक्रीडा जर्डैः ॥ ३५९ ॥

ममता नगणचतुष्टयं लघुगुरू च । जर्डैरित्यष्टाभिः पञ्चभिश्च यतिः । यथा—

"हस्ताक्षेपैरारं विद्रवति किल निकरमानिरहां,
पादानुपैः क्षोणीन्द्राणां विघटयति दृढनकुलिशविकमैः ।
वेगावेगात्सादम्यामिमैर्भवति च फणिपटलमुरगपतेः,
इत्थं मत्ता क्रीडामात्रं विरचयति नृपवर वा करिघटा ॥ ३५९.१ ॥

ताज्जन्गाः शङ्खः ॥ ३६० ॥

तगणात्परं जगणषट्कं लघुगुरू च । यथा—

चौलुक्यनरेश्वर वैभवभासुर वीरं गभीरिमवारिनिधे,
सौन्दर्यमनोभव कान्तिनिशाकर सेवकरूल्पतरो भवतः ।
यो नाम गुणानिह संकलयेत् किल वच्मि तु किंचन ते यशसां,
"संपर्कमवाप्य स "शङ्खधरोऽभवदद्रिसुताकमितुः" सदृशः ॥ ३६०.१ ॥

नाद्धंसंगतिः ॥ ३६१ ॥

नगणात्परं जगणषट्कं लघुगुरू च । यथा—

मदनगजेन्द्रमहोदयमादधती सहसा विमलप्रसरल्-,
लवणिमसिन्धुरनिन्द्रितनीलसरोरुहचारुलसन्नयना ।
विशदतराम्बरसंपदियं रजनीकरबिम्बमुखं दधती,
शरदिव संश्रितहंसगतिर्युवतिर्विदधाति न कस्य मुदम् ॥ ३६१.१ ॥

महातरुणीदयितमित्यन्ये ॥ ३६१.१ ॥

श्री रनौ रल्गाश्चित्रकम् ॥ ३६२ ॥

रनरनरनरलगाः । यथा—

---

1) नितमेलत्र विहृष्ट आकर्णितः । 2) हस्ताक्षेपैरित्यत्र प्रसारणैः भनक्ति वृक्षाणां समूहम् । पादाः पर्यन्तपर्वताः । विघटयति चूर्णयति दृढवज्रपतनैः । 3) चौलुक्येत्यत्र संबन्धं प्राप्य । 4 नारायणः । 5 अद्रिसुता पार्वती तस्याः कमिता भर्ता शिव. तस्य समानः श्वेतवर्ण इत्यर्थः ।

---

१ अ ललितेः N. २ फणिप॰ N. ३ वरारिघटा A. ४ धीर CDAP. ५ वंशगति OH.

श्रूयतां नृपकुमारपाल तव दर्शनत्वरितया व्यधायि यत्,
पादतामरसयोः सुवर्णकटके कराम्बुरुहयोश्च नूपुरे।
हारदाम च नितम्बबिम्बफलके भृशं हृदि च रत्नमेखला,
निर्ममे जतुरसो[१]ऽलिकेऽधरदले च [1]चित्रकमधीरचक्षुषा॥ ३६२.१॥

**भ्मौ स्भौ निल्गाश्चपलगतिः॥ ३६३॥**

भमसभा नत्रयं लघु[२]गुरू च। यथा–

भूमिभृतामङ्केषु विलासं स्वरुचिसदृशमति[2] हि विदधती,
सत्वरमानीता स्फुटमुच्चैः पटह इव नदति यशसि निजे।
[3]दुर्ललिता स्तम्बेरमकान्तेव नृपवर [4]दृढतरगुणै[३]र्गैः,
साधु भुजस्तम्भे भवता श्रीरतिचपलगतिरिह निगडिता॥ ३६३.१॥

**ज्सौ ज्सौ य्गिल्गा वृन्दारकम्॥ ३६४॥**

जसजसा यत्रयं लघु[४]गुरू च। यथा–

तदंह्रिपरिताडनं सरभसं कचाकर्षणं स्वेच्छया चोर्जितं,
मुखाम्बुरुहचुम्बनं प्रति मुहुर्नखैर्दा[५]रुणं निर्विशङ्कं जवात्।
नरेन्द्रतिलक [5]त्वदीयपरिपन्थिनां तुल्यकालं तदे[६]तत्कृतं,
[6]शिवाभिरिह [7]संगरे [8]गगनसीम्नि [9]वृन्दारकप्रेयसीभिस्तथा॥ ३६४.१॥
२३।७॥

**संकृतौ भ्तौ न्सौ भौ न्यौ तन्वी ठैः॥ ३६५॥**

भतनसभभनयाः। ठैरिति द्वादशभिर्यतिः। यथा–

वृन्तमयू[८]खाः शशधररुचयो वागमृतं [10]रतिरमणधनु[९]र्भ्रूर्,
लोचनलक्ष्मीस्तुलयति कमलं नूतनविद्रुमसुहृदधरश्च।
चम्पकगर्भप्रतिकृति च वपुर्हंसगतेरनुहरति च [11]यातं,
धच्मि विशेषं कमपरमथवा रम्यम[१०]हो किमिव हि न हि तन्व्याः॥ ३६५.१॥

**नौ भौ ज्नौ न्यौ ललितलता छ्छैः ३६६॥**

ननभनजननयाः। छ्छैरिति सप्तभिः सप्तभिर्यतिः। यथा–

1) श्रूयतां नृपेत्यत्र चित्रकं तिलकं चपलनेत्रया। 2) भूमिभृतामित्यत्र अति हि भृशार्थेऽखण्डमव्ययम्। 3) दुर्ललिता उत्कटहस्तिनीव। 4) दृढतरेति–गुणा औदार्यादयः, पक्षे रज्जवः। निगडिता। 5) तदंह्रिपरीत्यत्र त्वद्वैरिणां समकालम्। 6) शिवाभिः श्रेष्ठीभिः। 7) संगरे संग्रामे। 8) गगनसीम्नि आकाशप्रदेशे। 9) वृन्दारकेति–देवीभिः। 10) वृन्तमयूखा इत्यत्र रतिरमणेति–कामधनुर्वद् भ्रूः। 11) यातं गमनम्।

१ जतुरसोल्के P. २ ल्गौ च A. ३ दृढतरगुणै. साधु॰ N. ४ ल्गौ च A. ५ दारुणं ABCDN. ६ नदेव कृतं N; ७ च added in N. ८ मयूखाः G. ९ धनुभ्रूर्भो॰ N. १० रम्यमहो N.

परिमलविलुठन्मधुकरकवरी-[1]विरचितनिरवधिशोभाम्,
अभिनवकुसुमस्मितसुभगरुचिं मृदुतरकिसलयपाणिम्।
इह मधुसमये विलसति नियतं मनसिजशरपरिविद्धम्,
वनुललितलतायुवतिमयमहो कलयति मलयसमीरः ॥ ३६६.१ ॥

**नौ रूमेघमाला ॥ ३६७ ॥**

नगणद्वयं रगणषट्कं च। यथा–

त्रिभुवनविजयाय बद्धाभिमानस्य [2]शृङ्गारयोनेः प्रयाणक्षणे,
कनकघटितदण्डमेवत्किमाभाति नीलातपत्रं लसत्सर्वतः।
[3]नवतपविगमश्रिया दीप्रदीपेऽथ किं कज्जलार्थं धृतं [4]कर्परं,
[5]भ्रममिति विदधाति वीक्ष्योन्नतां मेघमालां जनो विद्युदालंकृताम् ॥ ३६७.१ ॥
भृङ्गाब्जनीलालकेत्येके ॥ ३६७.१ ॥

**भैः सुभद्रम् ॥ ३६८ ॥**

भूरिति भगणाष्टकम्। यथा–

शौर्यमृगेन्द्र चुलुक्यनरेन्द्र महत्त्वगिरीन्द्र गभीरिमसागर,
दोष्णि चिरं निखिलाचलसिन्धुयुतं वसुधावलयं तव बिभ्रति।
अद्भुतभारपरिश्रममुक्ति-[6]समुच्छ्वसितो भुजगाधिपतिस्त्वयि,
[7]शंसति संततमेष सुभद्रमखण्डमहोदयमस्त्विति संप्रति ॥ ३६८.१ ॥

**भिलनिसा द्रुतलघुपदगतिः ॥ ३६९ ॥**

भत्रयं तगणो नत्रयं सश्च। यथा–

[8]मुञ्चत नूपुरकङ्कणकाञ्चीः क्वणितभरविरचितकलकलाः,
स्वीकुरुताशुगतिं समयोऽयं न खलु समदगजललितगतेः।
संभ्रमवान् स्वयधूरनुशासद्रिरिसरिदभिमुखमतिकृपणः[9],
संप्रति सिद्धपते तव याति [10]द्रुतलघुपदगति रिपुनिवहः ॥ ३६९.१ ॥

**न्यौ भ्तौ निसौ संभ्रान्ता ॥ ३७० ॥**

नयभता नगणत्रयं सश्च। यथा–

1) परिमलेत्यत्र कवरी केशपाशः। 2) त्रिभुवनविजयेत्यत्र शृङ्गारेति–कामस्य। 3) नवतपेति–नवीनप्रावृट्लक्ष्म्या। 4) कर्परं कोसिउं इति प्रसिद्धम्। 5) भ्रमं भ्रान्तिम्। 6) शौर्यमृगेन्द्रेत्यत्र समुच्छ्वसितः उच्छ्वासं प्राप्तः। 7) शंसति प्रशंसति। 8) मुञ्चत नूपुरेत्यत्र पलायनसमये कलकलेति–शब्दानुकरणम्। 9) अतिकृपण इति–अतिदीनः। 10 द्रुतेति–क्रियाविशेषणम्।

१ अभिनय N. २ किशलय B. ३ कलयसमीर॰ A. ४ दण्डमेतत् repeated in A. ५ भ्रू AN. ६ शुभद्रं G. ७ समुच्छ्वसितो N. ८ कृपणान् N.

[1]रचयतु जन्मस्नानविधौ वस्त्रिजगदधिपचरमजिनपतेः,
　सुरपतितुङ्गोत्सङ्गनिषण्णस्य किमपि बलविलसितमतुलम् ।
मृदुचरणाङ्गुष्ठाग्रसमाक्रान्तिविधुरचालितकनकशिखरि-,
　स्फुटभयसंभ्रान्तामरयक्षोरगपति[1] निखिलदुरितदलनम् ॥ ३७० १ ॥

**म्सौ ज्सौ तौ भ्रौ विभ्रमगतिः ॥ ३७१ ॥**

मसजसततभराः । यथा –
दृष्ट्वा [2]त्वत्पृतनातुरगमखुरोद्धूत धरित्रीरजो गगनाङ्गणे,
　[2]तत्तद्भूतिमती विहाय सपदि स्वा राजधानीमपि [3]प्रियजीविताः ।
गच्छन्तोऽनुगिरीन्[4] पलायनविधिप्रत्यूहहेतु मुहुः सहचारिणा,
　दाराणां [4]कलहंसविभ्रमगतिं निन्दन्ति चौलुक्यचन्द्र तवारयः ॥ ३७१ १ ॥
　　२४।७ ॥

**अभिकृतौ भ्मस्भनौगाः क्रौञ्चपदा ङ्ङजैः ॥ ३७२ ॥**

भमसभा नगणचतुष्टयं गुरुश्च । ङङजैरिति पञ्चभिः पञ्चभिरष्टभिश्च यतिः ।

यथा –

[5]प्रोज्झ्य पुराणि त्वद्भययोगान्नृपवर भवदरिरतिशयविधुरो[6],
　दूरमरण्यं प्राप्य [7]कलत्रैः सह समजनि [8]गतिरयवशतृपितः ।
सारसनादात् स स्वयमादौ [9]प्रसरति कियदपि भुवमथ सहसा,
　प्रेक्ष्य चकोरक्रौञ्चपदाङ्का ध्रुवमिह सरिदिति निगदति दयिताः ॥ ३७२.१ ॥

**नीसभिगा हंसलयो जछैः ॥ ३७३ ॥**

नगणचतुष्टयं सगणो भगणत्रयं गुरुश्च । जछैरिति अष्टभिः[5] सप्तभिश्च यतिः ।

यथा –

[10]भवशतविरचितनिरवधिसुकृतैस्त्वत्कृतधर्मपथोऽधिगत.,
　[11]प्रणयिनि मयि कुरु तदसमकरुणा पश्य सुधारसपूर्णदृशा ।
अभिमततरमिति वितर जिनपते [12]शक्रफणीन्द्रनरेन्द्रनुत,
　प्रतिदिनमपि तव पदकमलयुगे देव भवेयमहं सलयः ॥ ३७३.१ ॥

---

1) रचयतु जन्मेत्यत्र व युष्माक दुरितदलन वीरजिनस्य बलविलसित रचयतु निष्पादयतु इति क्रिया-सबन्ध । 2) दृष्ट्वा त्वत्पृतनेत्यत्र तत्तत्सपत्सपूर्णाम् । 3) प्रिय जीवित येषां ते प्रियजीविता । 4) कल हसवद्राजहस इव विभ्रमेण युक्ता गतिस्ताम् । 5) प्रोज्झ्य पुराणीत्यत्र त्यक्त्वा भवद्भयसबन्धात् । 6) विधुरो दीन । 7) कलत्रैर्दारै । 8) गमनवेगवशतृषातुर । [illegible]) प्रसरति त्वत्कटकागमनबुद्ध्या स्त्रीणा ( स्त्रिय ) पश्चान्मुक्त्वा स्वय अग्रे आगच्छति । 10) भवशतत्यत्र भवाना शतम् । 11) प्रणयिनीति–स्नेहभाजि । 12) शक्रेत्यादि इन्द्रधरणेन्द्रचक्रवर्तिनुत ।

---

१ पति A　२ पृथना N,　३ धरणीरजो B,　४ नु गिरिं N　५ अष्टभि dropped in P
६ विर dropped in N

**त्यौ भौ नीगौ हंसपदा जैः ॥ ३७४ ॥**

तयभभा नगणचतुष्टयं गुरुश्च । जैरिति दशभि[1]र्यतिः । यथा –

अम्भोजवनं व्याकोशमिदं सलिलमतिविमलमिति[1] घनसरसि,
भ्रान्तोऽपि हि मा कार्पीर्गमनं यदिह विचरति हरिणशिशुनयना ।
तस्या अतिरम्यां वीक्ष्य गतिं [2]निरु[2]पमितिमतिशयमधिगतवतीं,
ह्रीतः सपदि त्वं हंस पदात् पदमपि चलसि न खलु नियतमदः ॥ ३७४.१ ॥

**न्जज्या नीगौ चपलम् ॥ ३७५ ॥**

नजजया नगणचतुष्टयं गुरुश्च । यथा –

क्वचिदपि चूतलतामुपभुङ्क्ते कचिदपि पिबति विचकिलल्ताम्,
कचिदपि चुम्बति माधविकां च क्वचिदपि परिसरति च लवलीम् ।
बहुविधपुष्पसमृद्धिनिधाने विलसति नवतरमधुसमये,
[3]चपलभुजंगविलासमजस्रं कलयति [4]मधुकर इह मुदितः ॥ ३७५.१ ॥
२५.४ ॥

**उत्कृतौ मौ तो निरसै[3]ल्गा भुजंगविजृम्भितं जटैः ॥ ३७६ ॥**

ममता नगणत्रयं रसलगाः । जटैरिति अष्टाभिरेकादशभिश्च यतिः । यथा –

क्वापि स्वैरं क्रू[4]रक्रीडन्महिषशतमचकित[5]-चरत्कुरंगकुलं कचित्,
क्वापि क्रीडाव्यग्रक्रोडं[6] क्वचिदपि मदजटविहरन्मतंगजसंकुलम् ।
सिंहक्ष्वेडारौद्रं क्वापि क्वचिदपि वि[5]षविषममहाभुजंगविजृम्भितं[7],
श्रीचौलुक्यक्षोणीनाथ स्फुटमजनि भवदरिमहीभुजामधुना पुरम् ॥ ३७६.१ ॥

**मनूसगगा अपवाहो झचचैः ॥ ३७७ ॥**

मो नगणषट्कं सगगाश्च । झचचै[6]रिति नवभिः षड्भिः षड्भिश्च यतिः । यथा –

[8]यः श्लाघ्यः प्रतिदिनमपि मदनदहनगरुडगमनचतुरास्यादै[7]र्,
गेयो यः सुरपतिपरिषदि च किमपि मुदितविबुधरमणीवृन्दैः ।
चौलुक्यान्वयजलनिधिहिमकर कियदिह तव नृपवर तस्यैवद्,
यत्सर्वं कृतमखिलमपरथमपभटमपगजमपवाहं च ॥ ३७७.१ ॥

1) अम्भोजवनमित्यत्र इतिरत्र हेत्वर्थे । 2) निरुपमेति – निर्गता रूपेण(उप)मितिर्मानो(नं)यस्मात्स्ताम् । 3) क्वचिदपीत्यत्र भुजंगो गणिकापतिस्तस्य चेष्टाम् । 4) भ्रमरः मुदितो हर्षं प्राप्तः सन् करोति । 5) क्वापीत्यत्र अचकितेति – शून्यत्वादिति शेषः । 6) क्रोडो वराहः । 7) विषविषेति – क्रीडितम् । 8) यः श्लाघ्य इत्यत्र मदनेति – ईश्वरकृष्णब्रह्मादिभिः ।

१ गुरु A; २ निरुपमितिमति AC. ३ निरस्गा G. ४ महिषशतमचकिततरकुरंगकुल N. ५ विषमतर 1; विष dropped in D; ६ झचचारिति N. ७ चतुरास्यादैर् N. ८ मिमुपि A.

भो नौ स्मौ निल्गा आपीडो डैः[1] ॥ ३७८ ॥

भननसमा नगणत्रयं लघुगुरू च । डैरिति[2] त्रयोदशभिर्यतिः । यथा —

[1]पश्य विविधवरविटपिनिकुञ्जश्यामीकृतविपुलतरकटकभूर्,
[2]आश्रमशतलसदिभहरिगौश्रीप्रेक्षारसवदमरयुवतिजनः ।
[3]रैवतकगिरिरियमिह पुरस्ताद्यस्मिन् जिनचरणनमनमिलिता-,
शेषसुरपतिपतदमलपुष्पापीडैर्भवति सुरभिरयमनिलः ॥ ३७८.१ ॥

न्जौ न्सौ भनिल्गा वेगवती ॥ ३७९ ॥

नजनसभा नगणत्रयं लघुगुरू च । यथा —

[4]नभसि भृशं स्तनति भरितदिक्कन्दरमभिनवजलधरपटले,
धृतमुदि नृत्यति च मधुरकेकाकलकलजुषि समदशिखिकुले ।
स्फुटितकदम्बकुटज-[5]सुमनःसर्जपरिमलमिलदलिनि च वने,
[6]मनसिशये च [7]भुवनजयसंवेगवति वत भवसि पथिक कथम् ॥ ३७९.१ ॥

नजभजिभ्जल्गाः सुधाकलशो ढैः ॥ ३८० ॥

नजभा जत्रयभजलगाः । ढैरिति चतुर्दशभिर्यतिः । यथा —

[8]अयमनुनीय सर्वसुरकार्यकृते मम वल्लभेन [9]दिविपपतिना,
ननु विनियोजितः [10]कवलितश्च ततस्त्रिपुरान्तकनयनहव्यभुजा ।
इति हृदये विचिन्त्य परिजीवयितुं [11]मकरध्वजं सपदि पूर्वदिशा,
नियतमुदासि[12] संप्रति [13]सुधाकलशः परिपूर्णशीतरुचिबिम्बमिषात् ॥ ३८०.१ ॥

२६।५ ॥

उक्तादिजातिप्रकरणम् ।

---

1) पश्य विविधेति — समीपपृथ्वी । 2) आश्रमेति — शांतत्वात् वन्यहिंस्रा उपशान्तवैराः । 3) रैवतेति — राजते इति क्रियाध्याहारः । 4) नभसि भृशमित्यत्र आकाशे गर्जिते । 5) सुमनः अनेकार्थे मालतीवाचकः । 6) मनसिशये कामे । 7) भुवनेति — सरभवति । 8) अयमनुनीयेत्यत्र पूर्वं हि तारकदैत्ये पीडितजगत्त्रये इन्द्रेण ईश्वरं ध्यानाच्चालयितुं कामः प्रेषितः स च ईश्वरेण दग्ध इति श्रुतिः । आमर्द्य कृत्वा । 9) दिविपपतिना — इन्द्रेण । 10) कवलितः कवलत्वं प्रापितः शंभुनयनाग्निना । 11) मकरेति — कामम् । 12) उदासीति — उत्पादितः । 13) अमृतकुम्भः पूर्णचन्द्रच्छलात् ।

---

१ स्मौ N. २ डैः O; ढैः A. ३ लगौ च A. ४ ढैरिति चतुर्दशभिर्यतिः N. ५ सुरपतिपदपदतमल A. ६ लगौ च A. ७ च dropped in N. ८ परिजीवितुं A. ९ P. adds समर्थदायके.

**शेषजातौ मतिनायि मालाचित्रं टैः ॥ ३८१ ॥**

मत्तगणत्रयं नगणद्वयं यगणत्रयं च एषां समाहारद्वन्द्वः। टैरिति एकादशभिर्यतिः। यथा–

पान्थाः शीघ्रं यात नातः परं वैः[1]
क्षणमपि यदिह शुभं तत्र गत्वाश्रयध्वं,
कान्तां नो चेदत्र तां देवतां स्वां
स्मरत सपदि भवतो हन्त संहर्तुकामः।
[1]कालोऽयं जीमूतनामाभ्युपैति
स्तनितवधिरितमहीमण्डलश्चण्डविद्युन्-,
मालाचित्राब्जमहारीति दूरात्
कथयति शिखिनिवहस्तारकेकारवेण ॥ ३८१.१ ॥ २७१ ॥

**म्तौ य्तौ निर्सल्गाः प्रमोदमहोदयो घछटैः ॥ ३८२ ॥**

मतयता नगणत्रयं रसलगाश्च। घछटैरिति चतुर्भिः सप्तभिरेकादशभिश्च यतिः।

यथा–

काप्युद्वीवा[2]भ्रास्थित वद्धोत्कण्ठं
करकलितशिथिलवसना दधाव च काचन,
[3]स्तम्भं दध्रे कापि च काचिदासी-
दतिशयितबहलपुलकाङ्कुरोल्लसिताङ्गिका।
काचिचक्रे भूषणमङ्गे काचित्
तिलकमकृत नवमलिके[4] चुलुक्यमहीपतौ,
यात्रां कृत्वोपेयुषि[5] पौरस्त्रीणां
समजनि निरवधिरधुना प्रमोदमहोदयः ॥ ३८२.१ ॥

यथा वा–

[6]वन्द्या देवी पर्वतपुत्री नित्यं मधुमधुरकमलवदना पुरन्ध्र्यधिदेवता,
देवैः स्तुत्या किंनरगेया भक्त्यावरचरितमहिषमर्धनी जगत्त्रयनायिका।
सिद्धैर्ध्येया केसरियाना कामं रणचतुररसिकहृदया त्रिलोचनवल्लभा,
वीरैः पूज्या दर्पणपाणिर्नूनं गुणनिलयलटभललिता सतीषु धुरंधरा ॥ ३८२.२ ॥ २९१ ॥

1) पान्थाः शीघ्रमित्यत्र कालः कृतान्तः श्यामवर्णश्च। जीमूतनामा। इदं विशेष्यं न तु कालस्य विशेषणं इदं हि क्रियते। 2) काप्युद्वीवेत्यत्र भ्रास्थितेति–चचाल। 3) स्तम्भं जाड्यम्। 4) मल्लिके माळे। 5) उपेयुषि आगते। 6) वन्द्या देवीत्यत्र पर्वतेति–गौरी। पुरन्ध्र्यधीति–पुरन्ध्रीणामधिदेवता सर्वोपमरूपेत्यर्थः। भवरचि (r.चरि for चि)तेति–दुश्चरितम्। गुणेति–गुणनिलया चासौ लटभललिता चेति विशेषणकर्मधारयः। लटभं प्रधानम्।

१ वक्ष्यणमपि A. २ नि.र्सल्गाः F; निरसल्गा GHP. ३ पुरन्ध्र्यपि देवता N. ४ मर्धिनी U.

**द्विर्भजसना भ्यौ नृत्तललितम् ॥ ३८३ ॥**

द्वौ वारौ भजसन इत्येते गणाः । भयौ च केवलौ । भजसनभजसनभया इति ।

यथा—

"[1]अद्य कलहंसललने ललितमन्थरगतौ
सपदि मानेय सपत्नरहितं स्वं,
कोकिलविलासिनि विधेहि कलगीतिरचना-
चतुरतामवममन्दमतिमत्ता ।
दुर्ललितनृत्तललितं "[2]युवमयूर रचय
त्वमपि संप्रति चिराय गतशङ्कः,
सर्वगुणकेलिसदनं चकितबालमृगलो-
लनयनां प्रियतमामिह विना ताम् ॥ ३८३.१ ॥ ३०१ ॥

**द्वादश ना ल्गौ ललितलता त्रिर्भैः ॥ ३८४ ॥**

द्वादश नगणा लघुर्गुरू च । त्रिर्भैरिति त्रीन् वारान् दशभिर्यतिः । यथा—

"[3]जिनचरणसरसिरुहपरिचरणरतमनसि
परमशममुपदधति कलितपरमलये,
विषयवलदलनजुषि वत तरुणि विकलमति-
चतुरतरनयनगतिमिह यतिनि तनुपे ।
व्रज मदन निजसदनमपसरणमुपरचय
पिकतरुण रणरणकमुपजनयसि न हि,
प्रकटयसि मधुसमय किमिति नवमदमुदित-
मधुपकुलकलरणितमुखरललितलताम् ॥ ३८४.१ ॥ ३८।१ ॥

**मौ तनीजभ्राः पिपीलिका जर्णैः ॥ ३८५ ॥**

मद्वयं तगणो नगणचतुष्टयं जभराः । जर्णैरिति अष्टभिः पञ्चदशभिश्च यतिः ।

यथा—

"[4]निष्प्रत्यूहं पुण्यां लक्ष्मीमविरतमभिलपसि यदि रमयितुं
सुखं च यदीच्छसि,

---

1) अद्य कलेति—दुर्ललितशब्दे लक्षणया सविलासम् । 2) युवा चासौ मयूरश्च । 3) जिनचरणेत्यत्र रतेति—रक्तम् । लये ध्याने । अपसरेति—प्रत्यागमनम् । हे पिकतरुण त्वमप्यपसरणं कुरु यतोऽस्य मुनेः औत्सुक्यं नहि जनयसि । नवदर्पदर्पितभ्रमरवृन्दमनोज्ञशब्दिउगाथालङ्कृतलतावल्लीम् । 4) निष्प्रत्यूहमित्यत्र निरन्तरायम् । अभिलपसी(सी)ति—आत्मनेपदमनित्यमिति न्यायात् परस्मैपदं वाञ्छसि ।

---

१ ललिने A. २ मानयि A. ३ ल्गौ च A. ४ उपसरणमुपरमय A. ५ तव मद० N. ६ मातनी० KHN. ७ नि.प्रत्यूहं AB.

स्यातुं [1]न्यायोन्मीलद्बुद्धे लघुभिरपि सह बहुभिरिह कुरु मा
विरोधपदं तदा ।
विस्फूर्जत्फूत्कारं क्रीडाकवलितसकलमृगकुलमजगरं
[2]भुजंगममुन्मदं,
[3]संघातं कृत्वा पश्यैता ग्लपितवपुषमनवधिरचितरुजा
अदन्ति पिपीलिकाः ॥ ३८५.१ ॥ ३०।१ ॥

**एषैव नीपरतः पञ्चदशपञ्चदशलवृद्धा क्रमेण**
**करभ ३५-पणव ४०-मालाः ४२ ॥ ३८६ ॥**

एषैव पिपीलिका चतुर्भ्यो नगणेभ्यः परतः पञ्चभिर्दशभिः पञ्चदशभिश्च लघुभिर्वृद्धा शेषगणेषु तथैव स्थितेषु क्रमेण करभादयो भवन्ति । तत्र पञ्चभिर्वृद्धा पिपीलिकाकरभः । यथा—

[4]नित्यं लक्ष्मच्छायाच्छन्नः
कलयतु कथमिव नव वदनरुचिममृतरुचिश्चिरं क्षयसंयुतः,
तुल्यं नाब्जं [5]स्फूर्जद्धूली-
विधुरितजननयनयुगमतिमृदुकरचरणस्य निर्मलचारुणः ।
कण्ठस्येयं दीसी श्यामा
परभृतयुवतिरपि मधुपरिचयकलविरुतिर्निसर्गकलध्वनेः[6],
भ्रूवल्लीभङ्गे छेकाया हरिणनयनमचतुरसतिललिततनु
करभोरु नो" सदृशं दृशः ॥ ३८६.१ ॥ ३५।१ ॥

दशभिर्वृद्धा पिपीलिकापणवः । यथा—

[7]कुन्दोऽमन्दः कुन्दच्छायः
शरदमलघनतुहिनविकचकुमुदवनहरहसितसितः[8] शशाङ्ककरोज्ज्वलः,
तारः [9]पारावारापारः
स्थलजलगगनतलसकलभुवनपथधवलनपरिचितः [10]प्रसाधितदिङ्मुखः ।

1) न्यायेन उन्मीलन्ती विकसन्ती बुद्धिर्यस्येति तत्संबोधनम् । 2) भुजैर्ये गच्छन्ति ते सर्वेऽपि गोधासर्पाजगरादयो भुजंगमा भुजपरिसर्पा उच्यन्ते । 3 संघेति - एकीभूय । ग्लपितं वपुर्यस्य त कीटिकाः । 4) नित्यं लक्ष्मेत्यत्र कलङ्कच्छायाव्याप्तः । 5) रजः परागश्च । 6) स्वभावरम्यध्वनेः । 7) कुन्दोऽमन्देत्यत्र कुन्दो विपुलः । 8) तुहिन-विकचकुमुदवन-शंकराट्टहासवत् शुभ्रः । 9) पारावारवत् समुद्रवत्पारः । 10) मण्डितं दिङ्मुखं येन ।

१ पूत्कारं N. २ उन्मुदं B. ३ वृद्धा BPH ४ माला A. ५ वृद्धाः ACDEX. ६ द्वेषु गणेषु B. ७ करभादयोऽपि E. ८ तेऽत्र N. ९ वृद्धाः C. १० दासी B ११ ते N.

[1]लोकालोकच्छेदं गत्वा

[2]दृढकठिनविकटदिगवधितटघटनविवलनवलयितो[3] विशुद्धयशश्चयः,

प्रोत्तुङ्गः श्वेतप्राकारो

[4]ध्वनितगुणपणव तव जयति नृपवर नवललितवसतेर्जगन्त्रितयश्रियः ॥३८६.२॥४०।१

पञ्चदशभिर्वृद्धा पिपीलिकामाला। यथा—

उत्फुल्लाम्भोजास्यास्तस्याः

कुसुमशरसुभग तव विरहदव इह हि जयिनि समुपचरणविषये व्यधायि सखीजनैः,

[5]अङ्गे वासः कर्पूराम्भ-

स्तिमितशुचि तुहिनकिरणकरपरिभवचतुरधवलिम कुचतटयुगे सुमौक्तिकदाम च।

[6]रम्भागुल्मं लीलागारं

मलयजरसकलितघसृणमभिनवविकचकुमुदवनदलसमुदयैश्च [7]तल्पककल्पना,

नव्या मौलौ मल्लीमाला

तदिदमखिलमपि दवहुतवहरुचि परिचितमहिम विरचयति मुहुः

प्रदाहमहाज्वरम् ॥३८६.३॥४५।१॥

## शेषजातिप्रकरणम्।

### अथ दण्डकाः।

यत् किञ्चिद् दृश्यते छन्दः षड्विंशत्यक्षराधिकम्।

[8]शेषजात्यादिकं मुक्त्वा तत् सर्वं दण्डकं विदुः ॥ ३८६.४ ॥

तत्र—

**नारूक्र चण्डवृष्टिः ॥ ३८७ ॥**

ना इति नगणद्वयं रूक्र इति रगणसप्तकं च। समाहारो द्वन्द्वः। यथा—

[9]अभिनवतरधुर्मदोद्दामपाथोदमालाप्रतिच्छादिते सर्वतो व्योमनि,

स्फुटितकुटजकेतकीपांसुपुञ्जच्छटाच्छोटिताशेषदिङ्ऐन्द्रदिग्मारुते[10]।

मुदितनिखिलनीलकण्ठैः कृते कूरकेकारवव्याकुले [11]ताण्डवाडम्बरे,

कथमिव चलितोऽसि भोः पान्थ हित्वा प्रियां [12]चण्डवृष्टिप्रपाताकुले वर्त्मनि ॥३८७.१॥

चण्डवृष्टिप्रपात इत्यन्ये ॥ ३८७.१ ॥

---

1) लोकालोकनाद्रेः मानुषोत्तरस्य गिरेः पर्यन्तम्। 2) सबलः कठिनः कर्कशः विपुलः। 3) अवधे-स्तटानि अवधितटानि दिशां, वलयाकार प्रासः। 4) ध्वनितो गुणा एव पटहो(पणवो) यस्येति। 5) अङ्गे, वास इत्यत्र वसनम्। तिमितेति—क्लिन्नम्। 6) कदलीगुल्मं केलीगृहम्। 7) शय्यारचनं संपादयन्ति। शेषजातिप्रकरणम्। 8) शेषजात्यादिकमिति—आदिशब्दाद् वक्ष्यमाणच्छन्दसां समर्दार्धादीनां ग्रहणम्। 9) अभिनवतरस्य पाथोदेति—मेघमाला। 10) इन्द्रो देवता अस्या ऐन्द्री दिक् कर्मधारयः तस्या वायौ। 11) नृत्याडम्बरे। 12) चण्डा प्रचण्डा या वृष्टिः तस्याः पतनेन व्याकुले।

---

१ विचलनवल० B, विवलनवल० N. २ समुपचरण० ■, ए० च० विषये P. ३ वसुधामभि० N. ४ दर्द्रि N. ५ पांसु ABC. ६ पुञ्जच्छटा A, ७ प्रपात० BFP.

**"यथोत्तरमेकैकरवृद्धा अर्णार्णवव्यालजीमूतलीला-**
**करोद्दामशङ्खादयः ॥ ३८८ ॥**

चण्डवृष्टेरूर्ध्वमेकैकरगणवृद्धाः क्रमेणार्णादयो दण्डकाः। तत्र नगणाभ्यां परैरष्टभी रगणैरर्णः। यथा—

"अविरलगुरुशाखिनोऽरण्यभागान् समुत्तुङ्गशृङ्गावलीशालिनः
"सर्वभूमीभृतो,
विपुलतरतरंगसंसंगिनीः कूलिनीरुच्छ्रितानेकसौधान् पुर-
ग्रामदेशानपि।
"स्थगयति तमसि प्रपन्ने सपत्नत्वमुन्मुक्तधैर्यस्य पाथो
निधेर्मङ्क्षु रज्यद्वपुः,
कुपित इव तदर्णसः प्रोचयौ तस्य संहारकारी समुद्यत्करो-
ऽयं निशावल्लभः ॥ ३८८.१ ॥

नवभिरर्णवः। यथा—

"प्रसृतनिबिडमारुतान्दोलिताश्वत्थसंशीर्णपर्णौघविस्फार-
वातोलिकापूर्यमाणाम्बरे,
घनवनदवदह्यमानाखिलक्रूरशार्दूलपोतोद्धतोद्भ्रान्त-
संत्रस्तमातङ्गयूथाकुले।
दिनकरकरतप्तकोलावलीश्रीयमाणार्द्रवत्ले लसल्लोल-
कल्लोलवाचालमाद्यन्महा-,
र्णवपयसि ननु प्रिय ग्रीष्मकालेऽधुना मा स्म गा मानय त्वं हि
पीनस्तनाश्लेषसौख्यानि मे ॥ ३८८.२ ॥

दशभिर्व्यालः। यथा—

"चिरवहदरघट्टसंपूर्यमाणोच्छलत्सारिणीतोयधाराभिरामं सदैकान्त-
कान्तप्रसर्पल्लता-,

1) यथोत्तरमित्यत्र एकैक'धाजिरा'गणवृद्धा इति। 2) अविरलेत्यत्र वृद्धवृक्षान्। 3) विश्वपर्वतान्। 4) स्थगयतीति—आच्छादनं कुर्वति तमोगणे वैरभावं प्रपन्नेऽङ्गीकृते। उन्मुक्तेति—यावन्मया सर्वं व्याप्तं किं च अनेनापि सर्वं व्याप्यते तन्मामपि कदाचिद् व्याप्स्यतीति धैर्यहीनस्य। रज्यद्वपुर्यस्येति—उदयसमये चन्द्रो रक्तो वर्ण्यते इति कविसमयः। तदर्णस इति समुद्रजलात् निर्ययौ तमसो विनाशकारी। हस्ताः किरणाश्च करा उच्यन्ते। 5) प्रसृतनिबिडेत्यत्र अश्वत्थः पिप्पलः। पोतो बालः। कोलः शूकरः। अल्वालं सरस्तडाः। आश्लेषः सम्बन्धः। 6) चिरवहदरघट्टेत्यत्र अरहट इति प्रसिद्धं। गुल्मः वृक्षान्तरितम्।

१ ससीर्ण A. २ वातोलिकी A ३ घनकलदव C; ४ समस्तानार्त यूथा॰ A. ५ घट्टपूर्यमाणोच्छल-च्छारणी B; घट्टसपूर्यमापोच्छ॰ B;

वहलिततरुगुल्मकेलीगृहं ये पुरोद्यानमुद्दामलीलाजुषः स्त्रीसखाश्चारु
चेरुश्चुलुक्येश्वर ।
"[1]तृपितकरटियूथभल्लूकसंदोहकोलव्रजव्याकुलाश्यान"[2]कल्लोलिनीवारि
दुर्वारसूर्यद्युति,
[3]व्यतिकरविधुरीकृतव्यालसंरुध्यमानद्रुमच्छायमुद्दण्डकान्तारमीयुस्त्व-
दीयद्विपस्तेऽधुना ॥ ३८८.३ ॥

एकादशभिर्जीमूतः । यथा —

"[4]जिनपतिपदपङ्कजस्पर्शपुण्यीकृताशेषशृङ्गः पुरस्तादयं तत्तदाश्चर्यसंपन्नि-
दानं भुवो भूषणं,
प्रतिविपिननिकुञ्जकूजत्पिकीपञ्चमोच्चारसंवर्गितस्वर्गसीमन्तिनीवर्गगीतिप्र-
पञ्चाभिरामोऽन्वहम् ।
कुरुवकसहकारकारस्कराशोकजम्बूकदम्बेङ्गुदीवेणुकान्तारमाला"[5]प्रतिच्छन्न-
मार्तण्डचण्डातपः,
प्रतितटविनिविष्टजीमूतसंदोहनिर्मुच्यमानामृतासारपूर्णोद्वहन्निर्झरः पश्य
दिष्ट्योज्जयन्तो गिरिः ॥ ३८८.४ ॥

द्वादशभिर्लीलाकरः । यथा —

"[6]घनपरिमलसारकर्पूरपानीयतिम्यद्दुकूलं कुकूलश्रियं पद्मिनी-
पल्लवस्रस्तरः खादिराङ्गारविस्फूर्जितं,
"[7]तुहिनकिरणचन्द्रिका हन्त हालाहलत्वं नवं चन्दनं तप्तलोहोपमां
वेणुवीणाविनादोऽपि कर्णज्वरत्वं दधत् ।
अयि तव विरहे यदस्या मृगाक्ष्या भवन्नामधेयाक्षरोच्चारमात्रैकर-
क्षार्जुषः सांप्रतं सर्वमेवाभजद् व्यत्ययं[8]",
तदतिसुभग सान्द्रपीयूषलीलाकरैस्त्वैर्वचोभिः समाश्वासयेनां" चिरा-
यान्यथा तु त्वमेवात्र [9]निःशूकचूडामणिः ॥ ३८८.५ ॥

1) तृपितकरटि(टी)[ति] – भल्लूक ऋक्षः । 2) आश्याना ईषत् शुष्का नदी । 3) व्यतिकरः संबन्धः । व्याकुलीकृतम् । 4) जिनपतिपदेत्यत्र पवित्रीकृताखिलशिखरः । संवर्गितस्वर्गकामिनी । अन्वहं निरन्तरम् । कारस्करो वृक्षः । इङ्गुदी गुडी । वेणुर्वंशः । 5) प्रतीति – आच्छादितः । जीमूत॰ मेघसमूहनिर्मुच्यमानजलवेगवद्वर्षैः । 6) घनपरिमलेत्यत्र घनो बहलः प्रधानकर्पूरजलसिक्तपट[दु]कूलम् । कुकूलेति – तुषानलशोभां दाहाधिक्यम् । विस्फूर्जितं अनुकारम् । 7) चन्द्रज्योत्स्ना । विषत्वम् । 8) व्यत्ययं वैपरीत्यम् । 9) निर्दयशिरोमणिः ।

१ पुरोद्यमयानमुलीला॰ A. २ चेलुक्यु॰ A. ३ यदाह A. ४ पति dropped in N. ५ पुष्पस्ता N. ६ कुभर A. ७ सवर्गगीति प्रप॰ O. ८ चन्द्रातपः A. ९ पूर्णोद्वहन्निर्झरः A. १० भवतः P. ११ रक्षातुरः B; १२ तदसि N. १३ एतां P.

त्रयोदशभिरुद्दामः। यथा–

"वलयितवरकन्धरं वल्गदुत्तुङ्गतेजस्विगन्धर्वराजीखुरक्षुण्णविश्वं-
भराक्षोदसंदोहविक्षेपणाद्दुर्दिनाडम्बरं",
प्रथममपि निरीक्ष्य सप्रेमकान्तामुखाम्भोरुहालोकने स क्षणं कौतुकी
नष्टकामोऽपि यावद्भवत्युन्मनास्त्वद्विपक्षव्रजः।
नृप तव सहसा जयश्रीविलासैकधामाभ्रमातङ्ग"-संसर्धिनोऽभ्रंकषैर्विग्रहै-
र्भीषणाः क्षोभयन्तो जगद्गर्जितैरूर्जितैः,
स्रुतमदजलनिर्झरैर्ध्वस्तधूलीवितानाः कृतान्ता इवोद्दामगन्धद्विपास्-
तावदाविर्भवन्तश्चिरान्मूर्च्छयामासुरेनं विभो॥ ३८८.६॥

चतुर्दशभिः शङ्खः। यथा–

"अमरपतिकरिभ्रमं बिभ्रतीभाः सममाः कलङ्कः कलाविभ्रमं धारय-
त्यत्रिनेत्रप्रसूतस्य कृष्णो बहत्यन्धकध्वंसकर्तुस्तुलां,
कुवलयवनमातनोति श्रियं पौण्डरीकीं कलिन्दात्मजा जह्नुकन्योज्ज्वलं
वारि धत्ते विधत्तेऽञ्जनाद्रिर्विलासं च कैलासपृथ्वीभृतः।
कलयति लवणोदधिः क्षीरपाथोधिलीलायितं शेषशोभामशेषाह्वयः" प्राप्नु-
वन्तीन्द्रनीलाश्च" मुक्तामणीनां समासादयन्ति त्विषं,
विचकिलहरहासनीहारहारेन्दुशङ्खावदातैरसीमैः स्फुरद्भिर्महीपालचूडामणे
"शासनैश्वर्यवज्रायुध त्वद्यशोराशिभिः॥ ३८८.७॥

आदिशब्दात् पञ्चदशभिः समुद्रः षोडशभिर्भुजंग इत्येवमादयो यथेष्टकृतनामानो यावदेकोनसहस्राक्षरैः पादस्तावद्भवन्ति॥ ३८८.७॥

नाभ्यां रयवादयः प्रचितः॥ ३८९॥

नगणद्वयात् परे यादयः सर्वे वर्णगणा यदा भवन्ति तदा प्रचितः। "रवद् इत्य-

1) वलयितवरेत्यत्र वलयिता वलयाकारं प्रापिता कन्धरा यत्रेति क्रियाविशेषणम्। वल्गन्तो धावन्त-स्तेजस्विनो गन्धर्वा अश्वास्तेषाम्। 2) दुर्दिनमिव दुर्दिनं मेघजं तमस्तस्याडम्बरस्तम्। 3) अभ्रमातङ्ग ऐरावणः। अभ्रं आकाशं कषन्तीति अभ्रंकषाः। उच्चस्त्वा। विग्रहा(है)ः शरीरा(रै)ः। ऊर्जितैर्दीप्रैः। कृतान्ताः यमा इव श्यामवर्णत्वात्। उद्दामेति–उत्कटमूर्च्छां प्रापयामासुः। 4) अमरपतीत्यत्र इन्द्रहस्तिभ्रान्तिम्। सर्वेऽपीभाः श्यामा अपि शुभ्रा जाताः। अत्रिनेत्रेति–चन्द्रो हि अत्रिऋषिनेत्रजात इति श्रुतिः। अन्धकेति–ईश्वरस्य। कलिन्देति–यमुना गङ्गोज्ज्वलम्। शेषेति–शुक्लः सः। 5) अतिशुक्लनागाः। 6) इन्द्रः मणिभेदः। 7) शासनं आज्ञा ऐश्वर्यं च ताभ्यां वज्रायुधस्तत्संबोधनम्। 8) रवदित्यतिदेशादिति–अत्र अन्यत्र विस्तारेण प्ररूपितस्य संक्षेपेण कथनमतिदेशः। कस्मिंश्चपि दण्डके रवद् यगणानां न्यासः भवतु, कस्मिंश्चपि भगणानां, कस्मिंश्चपि लगणानां इति। पुनः सप्तसु यगणेषु प्रचितः सप्तसु भगणेषु प्रचितः। तथा तगणादि-ष्वपि ज्ञेयम्। ततः परं सर्वेषां गणानां न्यासः। सद्दशान्येवार्णार्णवादीनि इति।

१ वलत्तुङ्ग N. २ तेजधि B. ३ रुहावलोकने A. ४ धामोऽभ्रमा° B. ५ श्रुत° A. श्रुत° CDN. ६ करिविभ्रमं A. ७ विभ्रती भो° N. ८ अशेषाह्वयः N. ९ शुभनामानो B. १० क्षरपादः N.

तिदेशात्सप्तभिर्यै: प्रचितः । ततः परमेकैकयादिवृद्धा अर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयोऽत्रापि भवन्ति । यथा—

[1]विलसदुरुतरवारि[2]प्रचण्डे महावाहिनीव्यूहविस्फारण[3]व्यक्तशक्तौ,
प्रकटयति रुचिराखण्डकोदण्डदण्डं दिशत्युच्चकै [2]राजहंसप्रणाशम् ।
प्रशमयति निखिलं मेदिनीचक्रसंतापविस्फूर्जितं[3] न्यक्कृतार्कप्रतापे,
[4]प्रचितघनवलैर्युक्ते नभसायमाने चुलुक्येश्वरे को न धत्ते प्रमोदम् ॥ ३८९.१ ॥

एवमादिषु शेषगणेषूदाहार्यम् । एकैकगणवृद्ध्या च अर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयोऽप्युदाहार्याः ।

नगभ्यामष्टादिराः पन्नग-दम्भोलि-हेलावली-मालती-
केलि-कङ्केल्लि-लीलाविलासादयः ॥ ३९० ॥

नगणाद्गुरोश्च परे अष्टादिसंख्या रगणा येषु ते यथासंख्यं पन्नगादयो दण्डका भवन्ति । तत्राष्टरगणः पन्नगः । यथा—

[5]अविकलध्यानसंतानधूमध्वजज्योतिराडम्बरप्लुष्टनिःशेषकर्मेन्धनो,
[6]विदलितोद्दमभूयःकषायश्रिरायैष पायादपायात् स वः पार्श्वनाथो जिनः ।
कमठवैत्ये च गाढोपसर्गक्रियाकर्कशे तत्प्रतीकारबद्धप्रयत्ने भृशं,
प्रकटितास्तन्वभक्तौ तदा पन्नगेन्द्रे चैं यस्याभवन् दृष्टिपाताः कृपार्द्राः समाः ॥ ३९०.१ ॥

एवमेकैकरगणवृद्ध्यान्येऽपि षडुदाहार्याः ॥ ३९०.१ ॥

लोर्यथेष्टं राश्चण्डकालः ॥ ३९१ ॥

लघुपञ्चकात्परे यदृच्छया क्रियमाणा रगणाश्चण्डकालः । यथा—

[7]विविधमणिमेखलाश्रेणिविश्राणितश्रीणि हित्वा पुराण्याशु चान्तःपुराण्युच्चकैः,
करटितुरगादिसेनासहस्राणि च स्वीकृतच्छद्मकर्मान्दिवेपास्त्वदीयद्विपः ।
प्रतिदिशममी गिरीणां महाकन्दराः शाखिगुल्मानि कूलंकषाकूलरन्ध्राणि च,
स्फुरति तव चण्डकाले कराले कृपाणे सदा सश्रयन्ते महीपालचूडामणे ॥ ३९१.१ ॥

एवमेकैकरगणवृद्ध्याप्युदाहार्यम् ॥ ३९१.१ ॥

1) विलसदुरुतरवारीत्यत्र महावाहिनी सेना नदी च । कोदण्डं इन्द्रधनुः । 2) राज्ञां जीवाः पक्षे राजहंसाः तेषां गमनम् । 3) विस्फूर्जितं क्रीडितम् । 4) प्रचितेति—घनं प्रभूतं यद्बलं सैन्यं पक्षे मेघानां बलम् । नभस्येति—भाद्रपदमासवदाचरति । 5) अविकलध्यानेति—अविकलं असाधारणं ध्यानं तस्य संतानः परंपरा [तेन] एव अग्निज्वालाडम्बरेण दग्धः कर्मेव इन्धनं येनेति सः । 6) विदलितेति—भूयो बहुः । 7) विविधमणीत्यत्र मेखला अद्रेर्मध्यभागाः विविधमणयश्च ता मेखलाश्च विविधमणिमेखलाः तासां श्रेणयः ताभ्यो विश्राणिता धार्यैः । पक्षे मेखला रसना । यद्वा पुरपक्षे मेखला स्वहचन्दो यस्य असवलेति प्रसिद्धिः इति प्रत्यन्तरे ।

१ स्युः F. २ तरोवारि A. ३ व्यक्त dropped in N. ४ दिशत्यु॰ N. ५ बलयुक्तो N. ६ स्युः F. ७ वयस्या॰ N. ८ कर्मान्दिवे॰ ADN. ९ ABN. drop एवं; D adds अन्यद् before अप्यु॰.

**याः सिंहविक्रान्तः ॥ ३९२ ॥**

लोः परे यथेष्टं यगणा यत्र स सिंहविक्रान्तः । यथा–

तरुणतरणितेजःप्रतप्ता वराहा इवारण्यभागेषु मुस्ताक्षतिं पल्वलान्ते,
विदधति किल केचित्तथान्ये महाभूभृतां कन्दराः कौशिकौघा[1] इवाभिश्रयन्ते ।
विपिनगहनमध्ये पुनः केऽपि [2]शाखामृगक्रीडितं बिभ्रति [3]प्रत्यनीकक्षितीशाः,
प्रकटयति सदा सिंहविक्रान्तलीलामनूनां त्वयीमां धरित्रीश चौलुक्यचन्द्र ॥ ३९२.१

एवमेकैकयगणवृद्धयाप्युदाहार्यम् ॥ ३९२.१ ॥

**लृगिभ्यां मेघमाला ॥ ३९३ ॥**

लघुषट्कात् गुरुत्रयाच्च परे यथेष्टं यगणा यत्र प्रयुज्यन्ते स[1] मेघमाला नाम दण्डकः । यथा–

अविरलमदपाथोनिर्झरप्रोक्षितक्षोणिपीठा महाशैलशृङ्गायमाणाः,
कपिशरुचिलसद्दन्ताशनिद्योतरौद्रा महागर्जितत्रासिताशेषलोकाः ।
रिपुनरपतिमातंगाः क्षणादेव देव प्रणाशं ययुः [4]संयुगान्तर्युगान्ता-,
निल इव विपुलप्राणे महामेघमाला महीपालधुर्ये त्वयि [5]प्रोज्जिहाने ॥ ३९३.१ ॥

एवमेकैकयगणवृद्धयान्येऽप्युदाहार्याः ॥ ३९३.१ ॥

**यथेष्टं रा मत्तमातंगः ॥ ३९४ ॥**

स्वेच्छया यत्र रगणाः प्रयुज्यन्ते स मत्तमातंगः । पुनर्यथेष्टग्रहणं लृगिभ्यामित्येतस्य निवृत्त्यर्थम् । यथा–

[6]पुष्पचापस्य चापश्रियं बिभ्रती भङ्गुरभ्रूविलासैः स्मितस्मेरकस्तूरिका-,
केलिपत्रावलीभङ्गिविभ्राजिगण्डस्थलेनेन्दुबिम्बानुकारं सदा कुर्वती ।
चारुवक्रोक्तिगर्भैर्वचोभिर्विदग्धैरमन्दं च पीयूषनिष्यन्दमावन्वती,
मत्तमातंगलीलागतिः काञ्चनच्छेदगौरी मुदं कस्य नाविष्करोति प्रिया ॥ ३९४.१ ॥

एवमेकैकरगणवृद्धयान्यदप्युदाहार्यम् ॥ ३९४.१ ॥

**साः कुसुमास्तरणः ॥ ३९५ ॥**

यथेष्टं सगणा यत्र प्रयुज्यन्ते स कुसुमास्तरणः । यथा–

1) तरुणतरणीत्यत्र कौशिकास्तत्समूहा इव धूकश्रेणय इव । 2) शाखामृगेति–वानराः । 3) प्रत्यनीका वैरिणः । 4) अविरलेत्यत्र संयुगान्तर्इति–महासमरमध्ये । यथा युगान्तानिलैः प्रोद्धतं सति विपुलप्राणे महापराक्रमे महामेघमालाः प्रणाशं यान्ति । 5) प्रोज्जीहीति–देदीप्यमाने । 6) पुष्पचापेत्यत्र कन्दर्पस्य धनुःश्रियम् । भङ्गुरेति वक्रम् । हास्यविकस्वरम् । कस्तूरीपत्रवल्लीत्वद्धमस्थाने भङ्गिः रचना । चारु इति–गर्भे मध्ये । आविष्करोति–प्रकटीकरोति ।

१ सा ABCDN. २ निर्झराप्लावित P. ३ ह्रस्व P. ४ निष्यन्द N. ५ कुसुमास्तरः D.

[1]सुभग त्वयि दूरमुपेयुषि सा न कदाचिदुपैति विलासगृहाभिमुखं,
विकचाब्जवने न ददाति दृशं शिशिरागुरुचन्दनपङ्कमपाकुरुते ।
न च हृष्यति [2]चाटुकरीषु सखीष्वपि पक्वपलाण्डुनिभं वहते वदनं,
कुसुमास्तरणानि पिनष्टितरां परिमुह्यति शीतलशीतमयूखकरैः ॥ ३९५.१ ॥

एवमेकैकसगणवृद्ध्यान्यदप्युदाहार्यम् ॥ ३९५.१ ॥

**याः सिंहविक्रीडः ॥ ३९६ ॥**

यत्र यथेष्टं यगणाः प्रयुज्यन्ते स सिंहविक्रीडः । यथा—

[3]क्वचित्पङ्कशङ्काभ्रमत्कोलदंष्ट्राग्रसमुल्लेखनिष्पिष्ट-
वेश्मान्तकाचावनीकं,
क्वचिन्नालिकेरीफलास्फालनव्यग्रशाखामृगश्रेणि-
पर्याकुलोद्यानभागम् ।
क्वचित्तप्तमज्जन्महासैरिभोद्दामशृङ्गाभघातोच्छलद्-
दीर्घिकावारिसान्द्रं,
क्वचित् सिंहविक्रीडफूत्कारघोरं चुलुक्येन्द्र जज्ञे पुरं
त्वद्रिपूणामिदानीम् ॥ ३९६.१ ॥

एवमेकैकयगणवृद्ध्यान्यदप्युदाहार्यम् ॥ ३९६.१ ॥

**ल्गावनङ्गशेखरः ॥ ३९७ ॥**

यत्र यथेष्टं निरन्तरौ लघुगुरू प्रयुज्येते सोऽनङ्गशेखरः । यथा—

[4]विशालभाललोलघूर्णमानकज्जलोज्ज्वलालक-
द्विरेफमालिकोपशोभिते,
विवुद्धहावमुग्धचारुपक्ष्मलालसभ्रमत्सु-
वारदीर्घनेत्रपत्रसुन्दरे ।
अमन्दकुन्दकुड्मलाग्रकोमलोल्लसद्द्युतीद्ध-
शुद्धदन्तपङ्क्तिकेसरालये,

---

1) सुभग त्वयीत्यत्र उपेयुषीति—गतवति क्रीडागृहसंमुखम् । 2) चाटुकेति—प्रियवचनानि तानि । पलाण्डुर्लसनकन्दः । पिनष्टि चूर्णीकरोति । परीति—मूर्च्छां गच्छति चन्द्रकिरणैः । 3) क्वचिदित्यत्र कर्दमभ्रमात् । कोलः शूकरः । अन्तः(न्त)शब्दः स्वरूपे प्रान्ते चान्ते च । शाखामृगेति—वानराः । महासैरिभो वनमहिषः । विक्रीडनेन क्रीडया फूत्काराः । 4) विशालभालेत्यत्र उज्ज्वलाः दीप्तिमन्तः येऽलकास्त एव भ्रमराः । हावो मुखविकारः । अनङ्गशेखरोऽनङ्गपरवशः ।

---

१ वते N. २ शिशिरागरु N. शशिरागुरु P; ३ प्रवातो॰ N; ४ विक्रीडि B. ५ लग (गौ) प्रयुज्येते A. ६ पूर्णमान॰ N.
११ छन्दो॰

प्रियामुखाम्बुजेऽधरं निपाय मध्विवापिबन्ननारतं
मवेदनङ्गदोरुरः ॥ ३९७.१ ॥

एवं लघुगुरुद्वन्द्वयान्यदप्युदाहार्यम् ॥ ३९७.१ ॥

ग्लावशोकपुष्पमञ्जरी ॥ ३९८ ॥

यत्र यथेष्टं निरन्तरौ गुरुलघू प्रयुज्येते सोऽशोकपुष्पमञ्जरीनामा दण्डकः । यथा—

अस्तमाश्रितस्तुपारभारपातदग्धसर्व-
पुष्पजातिसञ्चयो हिमर्तुरद्य,
सर्वतो वसन्तनामधेय एष जृम्भते प्रियः
सखा तवेह देव पुष्पचाप ।
विष्टपत्रयीपराजयेच्छया गृहाण नूतनान्
[1]शिलीमुखानखण्डितैकवीर,
चारुचूतकोरकानशोकपुष्पमञ्जरीर्नयाः
स्मितानि केसराणि पाटलाश्च ॥ ३९८.१ ॥

एवं गुरुलघुद्वन्द्वयान्यदप्युदाहार्यम् ॥ ३९८.१ ॥

ता गौ कामबाणः ॥ ३९९ ॥

यत्र यथेष्टं तगणा अन्ते गुरुद्वयं च प्रयुज्यते स कामबाणः । यथा—

[2]त्वद्वियोगे नवे बालिकाया मनोभूशरक्लेशशान्त्यै प्र-
यत्नात्सखीभिः समन्वात्,
पाथोजिनीपल्लवैः कल्पितं चारु तल्पं समासूत्रिता नूत-
नैर्हारयष्टिर्मृणालैः ।
रम्भादलैः कोमलैर्निर्मितं वालवृन्तं कृतश्चान्दनेन
द्रवेणाङ्गरागः किलास्याः,
तीव्रव्यथा प्रत्युतैतद्वितन्वत्समग्रं कठोराशयाशिश्रियत्
कामबाणत्वमुग्रम् ॥ ३९९.१ ॥

एवमेकैकतगणवृद्ध्यान्यदप्युदाहार्यम् ॥ ३९९.१ ॥

भा गौ भुजङ्गविलासः ॥ ४०० ॥

यत्र यथेष्टं भगणाः प्रयुज्यन्तेऽन्ते च गुरुद्वयं स भुजंगविलासः । यथा—

---

1) अस्तमाश्रित इत्यत्र शिलीमुखान् बाणान् । रम्या मञ्जरीः । स्मितानि विकसितानि । 2) त्वद्वि-[प्र]योग इत्यत्र तव विरहे नवे प्रथमोद्भवे । कल्पितं रचितम् । प्रत्युत समुत्सम् । कठिनाशय ।

---

१ अशोकमञ्जरी Bo. २ रयो B ३ जृम्भति N. ४ यात्रिधयन् A, यान्निशितान् N

[1]पीनघनोन्नतवृत्तविशालतरस्तनमण्डलगाढनिपीडन-
कण्टकिताङ्गः,
कोमलबाहुमृणाललताद्दढवेष्टितकण्ठतटः परिचुम्बन-
विभ्रमपात्रम् ।
वासगृहे वहलोच्छ्वसितागुरुधूमलतानिचिते शयने
मृदुनि [2]क्षणदायां,
यो दयितां रमयत्यतिसंभ्रममानजुषं स भुजंगविलास-
धुरामिह धत्ते ॥ ४००.१ ॥
एवमेकैकभगणवृद्ध्यान्यदप्युदाहार्यम् ॥ ४००.१ ॥

**नाभ्यां पञ्चमात्रैरुत्कलिका ॥ ४०१ ॥**

**द्वाभ्यां नगणाभ्यां परैर्यथेष्टं पञ्चमात्रैर्गणैरुत्कलिका नाम । यथा—**

[3]सितबकुलशिरीषकङ्केल्लिकोलनव्यप्रसूनावलीपरिमलविलोल-
रोलम्ब-[4]रोलाकुलीकृतासिलचारुलीलावनो,
मृदुमलयसमीर-[5]शैलूषशिक्षाक्रमानुगुणविविधाङ्गहारप्रयोग-
प्रपञ्चप्रवल्गल्लवानर्तकीरम्यरङ्गावनिः ।
अभिनवसहकारकोरकास्वादमाद्यत्-[6]पिकयुवतिपञ्चमोच्चारमच्चास्त्र-
साधितविषममानिनीमानदुर्गः समन्तादयं,
कमिव सपदि [7]संततोत्कलिकमिह नो विधत्ते जनं [8]हेलया निर्जिता-
शेषलोकस्य देवस्य कामस्य निर्व्याजबन्धुर्मधुः ॥ ४०१.१ ॥
एवमेकैकपञ्चमात्रवृद्ध्यान्यदप्युदाहार्यम् ॥ ४०१.१ ॥

दण्डकप्रकरणम् ।

*

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ
समवृत्तव्यावर्णनो नाम द्वितीयोऽध्यायः ॥ २ ॥
ग्रन्थाग्रं १०४३; उभयं ११६८ ।

---

1) पीनघनोन्नतेति—पीनाः पुष्टाः । घनाः कठिनाः । वृत्ता वर्तुलाः । 2) क्षणदायां रात्रौ । 3) सितबकुलेत्यत्र सकुले पुष्पम् । 4) रोलाः शब्दाः । 5) शैलूषो भरतः । 6) पिकयुवतिः कोकिला । 7) संततोत्कलिकं सारदारूनयन् । 8) हेलया क्रीडया । इति श्रीछन्दोनुशासनद्वितीयाध्यायपर्यायाः समाप्ताः ॥

---

१ कोमलबाहु° A. २ निभृत dropped in C. ३ वहलोच्छसितागुरु N. ४ दयिता मदनसंभ्रम° A. ५ ग्रन्था dropped in P. ६ रोलम्बरोलाकुली° वने B. ७ B ABCN.

# अथ तृतीयोऽध्यायः ।

इदानीमर्धसमवृत्तव्यावर्णनार्थमुपक्रम्यते –

**ओजयुजोः ॥ १ ॥**

अधिकारोऽयमाविषमवृत्तेभ्य उपतिष्ठते । तत्रौजं विषमं; युक् समं लोकसिद्धम्[1] ॥ १ ॥

तत्र –

**सिल्गा नभभ्रा हरिणप्लुता ॥ २ ॥**

पाद इति चानुवर्तते । ओजपादयोः सगणत्रयं लघुगुरू च । युक्पादयोः नभभरा यत्र वृत्ते सा हरिणप्लुता । यथा –

[1]"नृप शैलशिलाशयनासनाः, विदित[2]कन्दफलाहरणाः सदा ।

निवसन्ति वने भवतो द्विषस्[3], तरुनिकुञ्जगता हरिणप्लुताः[4] ॥ २.१ ॥

**सिल्गा भिगगा उपचित्रम् ॥ ३ ॥**

ओजपादयोः सगणत्रयं लघुगुरू च । युजोर्भगणत्रयं गुरुद्वयं च । यथा –

[2]"अयमत्र नृपः सचिवस्तरसा-, वेष कुमार इतः प्रतिहारः ।

उपचित्रमिति त्वदरेर्गृहे, वक्ति मिथः किल पान्थसमूहः ॥ ३.१ ॥

**लोनं वेगवती ॥ ४ ॥**

उपचित्रमेव लघुना रहितं वेगवती । ओजे सिगौ[5] युजि भिगगा इत्यर्थः । यथा –

[3]"नृपते तव कार्मुकवंशान्,-निष्पतिता शितसायकमाला ।

क्षितिभृच्छिरसि प्लवमाना, वेगवती यत नूतनरेवा[7] ॥ ४.१ ॥

[4]"आपातलिकेयम्[6] ॥ ४.१ ॥

**भिगगा नजज्या द्रुतमध्या ॥ ५ ॥**

ओजे भगणत्रयं गुरुद्वयं च । युजि नजजयाः । यथा –

[5]"वीरजिनेन्द्र भवत्पदपद्मं, भ्रमर इव द्रुतमध्यगमद् यः ।

मुक्तिवधूपरिरम्भणसौख्यं[8], करतलगामि कृतं खलु तेन ॥ ५.१ ॥

उपचित्रा । आपातलिकापरान्तिकेयम्[9] ॥ ५.१ ॥

---

अथ तृतीयोऽध्यायः सपर्यायो लिख्यते ।

1) नृप शैलशिलेत्यत्र आहरणं आहारः । हरिणवत् प्लुतं गमनं येषां ते । अथवा सुभटागमदाङ्कया हरिणेऽपि दृष्टे नष्टाः प्लुताः (ता.) । 2) अयमत्रेत्यत्र प्रती(ति)हारो दौवारिकः । उपचित्रमिति – त्वद्वैरिनगरे चित्रसमीपं परस्परं निदर्शयन्ति । 3) नृपते तवेत्यत्र रेवापि वंशाद्गिरेर्गच्छन्ति इति श्रुतिः । रेवा तु गिरेरधोभागे प्लवते इयं तु क्षितिभृतां राज्ञो [ शिरसि ] प्लवते ततो नूतनरेवा । 4) आपातलिकेयमिति – ओजे षण्मात्रा युज्यष्टौ भगणद्वयान्ताश्चेदापातलिका । 5) वीरजिनेन्द्रेत्यत्र अध्यगमद् मध्ये (अधि?) गच्छति । मुक्तिरामोपगूहनसौख्यम् । हस्तगामि ।

---

१ लोकतः सिद्ध P. २ विदित dropped in N. ३ रिपोस् N. ४ N. adds प्राच्यवृत्तिरियम् । ५ सगौ च A. ६ ओजयोरन्त्यलघुना न्यूनम् । आपातलिकेयं P. ७ रेखा N. ८ मुक्तिवधूपरि० A. ९ इयं dropped in A.

तजगा भसजगगा भद्रविराट् ॥ ६ ॥

ओजे तजरगाः। युजि मसजगगाः। यथा—

[1]"पश्येद्भगवन् पदारविन्द-, द्वन्द्वं भक्तित एकदापि यस्ते।
विभ्रद्भुवनाधिपत्यमेकं, भद्रं भद्रविराट् भजेत सोऽपि ॥ ६.१ ॥

औपच्छन्दसकमिदम् ॥ ६.१ ॥

सजसा भरनगगाः केतुमती ॥ ७ ॥

ओजे सजसगाः। युजि भरनगगाः। यथा—

[2]"प्रसरद्रजःस्थगितसूर्यां, केतुमतीमुदीक्ष्य तव सेनाम्।
वसुधापते दिवमिवात्म-, नाशमशङ्कत त्वदरिवर्गः ॥ ७.१ ॥

BHARATIYA V... S. N.... LIBR...

ताजगगा जतजगगा आख्यानकी ॥ ८ ॥

ओजे ततजगगाः। युजि जतजगगाः। यथा—

[3]"त्वद्वैरिभूवैरियमागतोऽचिर-, मरालनादैर्मुखरा शरच्छ्रीः।
आख्यानकीव त्वदनीकयात्रो-, त्सवस्य सद्यःकृतिभिरुदैक्षि ॥ ८.१ ॥

आख्यानकी वार्ताहारिका ॥ ८.१ ॥

व्यत्यये विपरीतादिः ॥ ९ ॥

व्यत्यये इति ओजे जतजगगाः। युजि ततजगगाः। विपरीतादिर्विपरीताख्यानकीत्यर्थः। यथा—

[4]"अमंस्त ते दुर्नयचेष्टितानाम्, आख्यानकीं या विपरीतवृत्तिम्॥
पुरः सखीनां मुखता विपक्ष-, नाम त्वया संमति लम्भिता सा ॥ ९.१ ॥

[5]"एतयोश्च उपजात्यन्तर्गतत्वेऽपि विशेषसंज्ञार्थमत्र पाठः ॥ ९.१ ॥

रजजा जजगा यवमती ॥ १० ॥

ओजे रजरजाः। युजि जरजरगाः। यथा—

1) पश्येद्भगवन्नित्यत्र भद्रं कल्याणं भजेत। भद्रे स्वादेवे विराजते भद्रविराट्। 2) प्रसरद्रज इत्यत्र आच्छादितरविम्। केतवो ध्वजा महाश्च। आकाशमिव। यदा गम(ग)ने केतुरुदयति तदा जीवानां नाशो भवतीति लोकाः। [दिवशब्देन दिनं भासते। यतो यथा दिनस्यात्मनाशो जातः तथास्माकमपि ए. १०.]। 3) त्वद्वैरीत्यत्र हंसध्वनिभिः। आख्यानं करोति कारयति वा गौरादित्वात् ङीः। उदैक्षीति—दृष्टा। 4) अमंस्त ते इत्यत्र या कामिनी तव दुर्नयचेष्टितानां कथयित्री अभवत् परामुखवृत्तिं सा मौनं विपक्षायाः सपत्न्याः नाम सखीनां पुरतो मुखता वीर्य धत्ते इति। 5) एतयोरित्यत्र इन्द्रवज्रोपेन्द्रवज्र.(ज)-[योरुपजाति]-अन्तर्गतापि विशेषावबोधार्थं उक्ता वृत्ताद्वयमपी।

१ औपच्छन्दसकमिदं ABN. २ आख्यानिकी H. ३ आख्यानकय-द्विति: A. ४ यवमती BN.

[1]धन्यसैरिभा भवद्विपक्षधाम्नि, निरन्तरेन्द्रनीलबद्धभूमिभागे।
न्यग्गुरुं प्रकुर्वते मुधा वितर्क्य, विनीलविस्फुरद् यवान्वितां धरित्रीम् ॥ १०.१ ॥

यवान्वितां यवमतीमित्यर्थः। छन्दोवशाच्च यवान्वितामित्युक्तम् ॥ १०.१ ॥

व्यत्यये षट्पदावली ॥ ११ ॥

व्यत्यये इत्योजे जरजरगाः। युजि रजरजाः। यथा–

[2]नवोदयं चिरादुपेयिवांसमर्कं, स्वागतानि पृच्छतीव संमदेन।
सरोजिनी विकस्वरा निशावसाने, षट्पदावलीकलस्वनच्छलेन ॥ ११.१ ॥

नभभ्रा नभिरा मकरावली ॥ १२ ॥

ओजे नभभराः। युजि नो भत्रयं रश्च। यथा–

[3]मकरकेतुभटस्य विराजते, धरधनुर्ध्वजयष्टिरिव प्रगुणीकृता।
मृदुकपोलतले दधती नवां, मृगमदस्तबकैर्लिखितां मकरावलीम् ॥ १२.१ ॥

मसागाः सभासाः करिणी ॥ १३ ॥

ओजे मः सगणद्वयं गुरुश्च। युजि सो भगणद्वयं सश्च। यथा–

[4]चन्द्रो मत्तकरीन्द्र इवायं, वलितोद्दामतमस्तरसाहनः।
क्रीडत्यम्बरपल्वलमध्ये, स्फुटतारकरिणीभिरनुसृतः ॥ १३.१ ॥

साज्गाः सभ्रल्गाः प्रबोधिता ॥ १४ ॥

ओजे सद्वयं जगौ च। युजि सभरलगाः। यथा–

[5]तरुमूलगृहाः क्षपाक्षये, नृप निद्रां जहति द्विषस्तव।
विटपान्तकुलायनिष्पतत्–, पतगश्रेणिरवैः प्रबोधिताः ॥ १४.१ ॥

नारल्गा नजज्रा अपरवक्त्रम् ॥ १५ ॥

ओजे नगणद्वयं रलगाश्च। युजि नजजराः। यथा–

[6]नृपवर भवदीयवर्णनं, निखिलमुखै रचयन् पुरातनैः।
अधिकमपरवक्त्रमीहते, श्रुतिपठनाय चतुर्मुखोऽधुना ॥ १५.१ ॥

एतौ वैतालीयभेदौ ॥ १५.१ ॥

1) धन्यसैरिभा इत्यत्र धन्यमहिषाः त्वद्वैरिगृहे। निर्घ्य। आतङ्क्य। नूतनयवयुक्तां वसुधाम्। 2) नवोदयमित्यत्र उपेयिवांसं आगतम्। स्वागतेति–शोभनान्यागतानि स्वागतानि कुशलागमनानि। निशेति–रात्रिप्रान्ते। छलेन कपटेन। 3) मकरेत्यत्र कन्दर्पसुभटस्य। कामिनी। ध्वजः पताका। मकरेति–मकरस्य रूपाकृतिपत्रलेखाम्। ध्वजेऽपि मकरस्यापि भवन्ति। 4) चन्द्रो मत्तेत्यत्र उद्दामो दीप्तः। अनुसृतः आश्रितः। 5) तरुमूलेत्यत्र शाखामान्तनाडकनिर्गच्छत्पक्षिशब्दैः। 6) नृपवरेत्यत्र पुरातनैः जीर्णैः। पञ्चमं वाञ्छति ब्रह्मा।

१ यवत्रती LNP. २ व्यत्यये इति dropped in P. ३ नभ्रावली G. ४ गद्वयं गुरु A. ५ भद्वयं A. ६ अनुसृताः A. ७ सभल्गाः D; सुभ्रगल्गा. A. ८ प्रबोधिता B. ९ नद्वयं A.

**गान्तं पुष्पिताग्रा ॥ १६ ॥**

अपरवक्त्रमेव ओजयुजोर्गान्तं पुष्पिताग्रा । यथा–

[1]स्मर इव शयितः कयाप्यशोके, पदहननेन जगज्जयाय सुप्तः ।
सपदि यदिपवोऽस्य पुष्पिताग्र-, प्रसवमिषात् प्रगुणाः परिस्फुरन्ति ॥ १६.१ ॥

**साज्गगाः स्भर्या मालभारिणी ॥ १७ ॥**

ओजे ससजगगाः । समे सभरयाः । यथा–

[2]इह वासकसज्जिकाविलासं, वहते शारदशर्वरी वरेण्यम् ।
अवतंसितकैरवोज्ज्वलश्रीः, [3]विकसच्चारकमालभारिणीयम् ॥ १७.१ ॥

नितम्बिनीत्यन्यः । औपच्छन्दसकभेदावेतौ ॥ १७.१ ॥

**भातल्गा न्जन्सगा विलसितलीला ॥ १८ ॥**

ओजे भद्वयं तलगाश्च । युजि नजनसगाः । यथा–

[4]वक्रनिरीक्षणभङ्गिप्रणयी, भ्रमति धनुर्विलसदिपुरनङ्गः ।
भृत्य इवाशु यदाज्ञां विदधद्, रमयति सा नवविलसितलीला ॥ १८.१ ॥

**भ्रन्जनल्गा ग्रैर् न्जभ्जन्साष्टैर्मानिनी ॥ १९ ॥**

ओजे भरनजनलगाः । ग्रैरिति दशभिर्यतिः । युजि नजभजनसाः ।
टैरित्येकादशभिर्यतिः । यथा–

[5]मानभृतामिदं तृणमिव जीवितमिति न किं,
कलयसि शासि रोहिणि न यत्त्वमपि निजपतिम् ।
दक्षसुते कलङ्कय पितृगोत्रमलमधुना,
विरमथ मानिनीजनवधानुमतिघटनया ॥ १९.१ ॥

**रो ज्रल्गाः कामिनी ॥ २० ॥**

ओजे रगणः । युजि जरलगाः । यथा–

[6]निर्वृतिं,
विधेहि हस्तगामिनीम् ।

1) स्मर इवेत्यत्र सुप्तः प्रेरितो जागरितश्च । यस्मात् कामस्य सज्जीकृताः । 2) [illegible] वासकेत्यत्र या सङ्केतं सविलासं ददाति सा वासकसज्जिका । या स्त्री भर्तरि समागते स्वं मण्डयति सा वा इति प्रलम्बरे । 3) विकसदिति–माला श्रेणिः पुष्पादिमयी च । 'मालेपीकेष्टकस्यान्ते भारितूलचिते' ( सि० है० २.४.१०२ ) इति ह्रस्वः । 4) वक्रनिरीक्षणेत्यत्र कटाक्षभङ्गीषु कृताश्रयः स्फुरति । धनुषि विलसन्त इषवो बाणा यस्येति । सा स्त्री रमयति लोकं इति शेषः । 5) मानभृतामिदमित्यत्र कलयसि इति–किं न जानासि । शास्सि शिक्षयसि न स्वभर्तारम् । मानिनीति–चन्द्रो हि विरहिणीमानिनीजनानां दाहकरणादिति स्वं निजपतेर्मानिनीजनवधानुमतिं ददासीति भावः । 6) निर्वृतिं विधेहि इत्यत्र करगताम् । जहि त्यज ।

१ कयाथ शोके N. २ प्यपदहनेन N. ३ इयं dropped in A. ४ औपच्छन्दसिक० BN. ५ वक्रनि० ADEN. ६ भ्रनजनल्गाः B; ७ नजभ्जनसाः A; न्जभ्जनगाः CD; न्जभजनमाः N; नजभ्जन्साः P. ८ मानिनीः N. ९ शासि A; शासिग B; शनि D; शाटिस N. १० न यत्त्वमपि repeated in A.

सर्वथा,

जहीहि हन्त कामिनीम् ॥ २०.१ ॥

**रो जजाः शिखी ॥ २१ ॥**

ओजे रगणः। युजि जरजराः। यथा–

[1]योषितो,

वियोगदुःखखिद्यमानमानसाः।

दन्वहत्,

कटुस्वनैर्मयूर निश्चितं शिखी ॥ २१.१ ॥

**रो जजौ ज्गौ नितम्बिनी ॥ २२ ॥**

ओजे रगणः। युजि जरजरजगाः। यथा–

[2]सर्वथा,

विरिञ्चिशंकरामराधिराजकेशवर्षयः।

भेजिरे,

यदुलर्थ चिराय तत्र कारणं नितम्बिनी ॥ २२.१ ॥

**रस्त्रिर्जौ ल्गौ वारुणी ॥ २३ ॥**

ओजे रगणः। युजि त्रीन् वारान् जौ। जरजरजरलगाः। यथा–

[3]उत्तमं,

घनानिनन्धरप्रमोदकारणं फलिन् यदीहसे सुरतम्।

निर्मलं,

तदा शमामृतं पिबानिशं सुदारुणं विमुञ्च [4]वारुणीम् ॥ २३.१ ॥

**रश्चतुर्जौ वतंसिनी ॥ २४ ॥**

ओजे रगणः। युजि चतुरो वारान् जौ। जरजरजरजराः। यथा–

शोभते,

धनुर्लतेव पुष्पधन्वनः शिरीषकोमलाङ्गिका सरोजलोचना।

बालिका,

जपासहोदराधरा [5]मधूककान्तिमत्यशोकपल्लवावतंसिनी ॥ २४.१ ॥

---

1) योषित इत्यत्र हे मयूर त्वं शिखी असि निश्चयेन। शिखी मयूरो वह्निश्च। 2) सर्वथेत्यत्र सन्मार्गे चिरकालम्। 3) उत्तममित्यत्र अविनाशिपदहेतुम्। 4) मदिराम्। 5) शोभत इत्यत्र मधूककान्तिमतीति–गौराङ्गीत्यर्थः। कंकेलिकिसलयशेखरवती।

---

१ मान dropped in c. २ निहन्ति x. ३ रो जजजगाः BP. ज्गौ dropped in. o. ४ विरिञ्च A; विरिञ्चि P. ५ रः A. ६ सने A. ७ रः A. ८ सने A.

**कामिन्याद्या व्यत्यये वानरीशिखण्डिसारस्यपराहंस्यः ॥ २५ ॥**

कामिनी - शिखि-नितम्बिनी-वारुणी-वतंसिन्यः ओजयुग्पादयोर्व्यत्यये यथासंख्यं वानरी - शिखण्डि - सारस्यपरा - हंसीसंज्ञाः । कामिनीव्यत्यये वानरी । यथा—

"नियम्य गाढसंततैः,
सद्गुणैः ।
सखे स्थिरां कुरु श्रियं,
वानरीम् ॥ २५.१ ॥

शिखिव्यत्यये शिखण्डी । यथा—

तपात्यये घनध्वनन्मृदङ्गके,
कुर्वते ।
अराण्डपङ्कजगीतयः शिखण्डिनस्,
ताण्डवम् ॥ २५.२ ॥

नितम्बिनीव्यत्यये सारसी । यथा—

"त्वमम्बुजलोचने शरत् त्वदीयमेतदाननं,
चन्द्रमाः ।
झणज्झणायितस्वनाऽपि मेखला विभाति ते,
सारसी ॥ २५.३ ॥

वारुणीव्यत्यये अपरा । यथा—

"जिन त्वदीयशासनादृते विवेकदीपको भवत्ययं,
न क्वचित् ।
तमश्छिदाक्षमं हि तेज एकमूर्जितं प्रसूत इन्द्रदिक्,
नापरा ॥ २५.४ ॥

वतंसिनीव्यत्यये हंसी । यथा—

"त्वदारवे कलस्वराद्भुते विस्मृतस्वनिस्वना यकी जगाम साधुना,
मूकताम् ।
सरो विकस्वराम्बुजाकरं प्रियप्रणीतचाटुका वदेहि सोत्सरं,
हंसिके ॥ २५.५ ॥

---

1) नियम्येत्यत्र नियम्य । सद्गुणैरिति–गुणा रज्जवश्च । वानरीम् वानरीं त्वं चपलां इत्यर्थः । 2) त्वमम्बुजेत्यत्र सारसीव सारसी मधुरमधुरस्वरसारा । 3) जिन त्वदीयेति अत्र ऋते विना । इन्द्रदिक् पूर्वा । 4) त्वदारवे इत्यत्र कलवाण्या । मूकत्वम् ।

---

१ कलेन B. २ अराण्डसत्व B; अराण्डपद्म D. ३ त्वमम्बुजलोचने repeated in A. ४ शरद् N. ५ रणज्झणायित AP; झणझणायित BN. ६ ते dropped in A. ७ शरदा is repeated in A.

पथ्यामहाचपलोद्गीतिर्यथा—

"[1]चपले प्रयातु मानादयं वराकः किमाह्वयसि।
प्रतिभूरमुष्य भूयः समागमे भाविनी पिकोद्गीतिः॥ ८.३ ॥

महाविपुलामहाचपलोद्गीतिर्यथा—

"[2]बाला कुतोऽपि सारङ्गिकेव सा विपुलचपलाक्षी।
श्रुत्वा तवाभिधोद्गीतिमाशु[1] "[3]निष्पन्दिनी[2] चिरं भवति॥ ८.४ ॥

एवं शेषेषु द्वादशसु भेदेष्वप्युदाहार्यम्। तत्रायं संग्रहः—

"[4]एकैव भवति पथ्या तिस्रो विपुलास्ततश्चतस्रस्ताः।
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्याः स्युः॥ ८.५ ॥
गीतीनां त्रयमित्थं प्रत्येकं षोडशप्रकारं स्यात्।
साकल्येनार्याणाममी विकल्पाश्चतुःषष्टिः॥ ८.६ ॥

गीतिः सप्तमे पे रिपुच्छन्दाः॥ ९ ॥

गीतिरेव सप्तमे पे पञ्चमात्रे गणे रिपुच्छन्दाः। अतः परं प्राकृतादौ छन्दसां भूम्ना प्रयोग इति तत्रैवोदाहरिष्यते। यथा—

"[5]केलाससेलतुलणामाणं[3] मा वहसु संपयं दसमुह।
उअ हरिपुच्छंदोलणतोलिज्जंते[4] महोअहिम्मि[5] गिरिणो॥ ९.१ ॥

अत्र पगणस्याष्टभेदत्वेऽपि 'नौजे जः' इति जगणानुविद्धभेदद्वयवर्जनात् षड् भेदाः। ततस्तेषां शेषगणविकल्पानां चान्योऽन्यताडनायां[6] पूर्वार्धे जाता एकोनविंशतिः सहस्राणि द्वे शते। तावद्भिरेवोत्तरार्धविकल्पैर्घाते जाताः षट्त्रिंशत्कोट्यः षडशीतिर्लक्षाश्चत्वारिंशत्सहस्राणि॥ ९.१ ॥

तृतीये[7] ललिता॥ १० ॥

गीतिरेव तृतीये पे ललिता। यथा—

"[6]अंगुलिआहिँ ललिअंगी पवासदिअहे गणंतिआणुदिणम्।
वल्लहआयड्ढणकए[8] जवइव मंतक्खराइं एक्कमणा[9]॥ १०.१ ॥

अत्र तृतीयपगणस्य षड्विकल्पत्वे प्राग्वत्तावन्त एव भेदाः॥ १०.१ ॥

---

1) चपले प्रयात्वित्यत्र वराकः क्लीबः। एनं व्रजन्तं मा निषेधय। आकारयसि। 2) बाला कुतोऽपीत्यत्र कान्ता हरिणीव भवति। अभिधायाः नाम्नः उद्गीतिः भणनं पक्षे गानम्। 3) निश्चला। 4) एकैव भवतीत्यत्र चतस्र इति—पथ्या १ विपुला ३। भिन्ना इति प्रत्येकं योज्यम्। 5) केलाससेलेत्यत्र हे दशमुख कैलासपर्वततोलनात् मानं मा वह सांप्रतं पश्य हरयो वानरा अथवाञ्जनेयस्तेषां तस्य वा पुच्छान्दोलनेन पर्वताः तोल्यन्ते समुद्रे। 6) अंगुलिआहिँचि—वल्लभाकर्षणकृते एकमना इयम्। इवोत्प्रेक्षणे। अनुदिनं अङ्गुलिकाभिर्मन्त्राक्षराणि। गणयंति(न्ती) वल्लभकथितदिवसगणनव्याजतः। जपतीव।

---

१ तवाभिदो॰ N. २ निष्यन्दिनी N; [illegible]स्पन्दिनी P. ३ केलाससेल N; केलासहेल KP. ४ पुलणा S. ५ महोअहंमि U. ६ अन्योऽन्यताडने A; अन्योऽन्यहतौ E. ७ अथ प्रायः प्राकृते तृ॰ C. ८ आयहणकए ADCE. ९ इक्कमणा E.

द्वाभ्यां भद्रिका ॥ ११ ॥

गीतिरेव द्वाभ्यां सप्तमतृतीयपगणाभ्यां भद्रिका। यथा—

[1]जुवईण नयणलच्छीए सहजसलोणत्तणेण भद्दिआए।
चक्खुभंएण[1] व दिण्णयं लक्खिज्जइ कज्जलं वयंसिआहिं ॥ ११.१ ॥

अत्र तृतीयसप्तमपगणयोः षट् षट् भेदास्ततस्तेषामन्यविकल्पानां चान्योऽन्यघाते जाता अष्टाविंशतिः सहस्राणि अष्टौ शतानि पूर्वार्धे। तेषां तावद्भिरेवोत्तरार्धविकल्पैर्घाते जाता द्व्यशीतिः कोट्यश्चतुर्नवतिर्लक्षाश्चत्वारिंशत्सहस्राः ॥ ११.१ ॥

षष्ठं विनेष्टपैर्विचित्रा ॥ १२ ॥

गीतिरेव [2]षष्ठगणं विना यथेष्टं पगणैर्निबद्धा विचित्रा। यथा—

[3]भासासु विचित्तासु जुगवं सुरनरतिरिआण जीवजाईण[3]।
संवादमणुहवंती जयइ वाणी भयवओ[4] जिणिंदस्स ॥ १२.१ ॥

विचित्रभेदत्वादस्या विकल्पसंख्या नोक्ता। केचित्सर्वैरपि पगणैरिच्छन्ति ॥१२.१॥

चेऽष्टमे स्कन्धकम् ॥ १३ ॥

गीतिरेवाष्टमस्य गुरोः स्थाने चगणे कृते स्कन्धकम्। आर्यागीतिरित्यहीन्द्रः। अत्र गीत्यर्धविकल्पानामष्टमचगणविकल्पपञ्चकेन ताडने जाताश्चतुःषष्टिः सहस्राः पूर्वार्धे। तावद्भिरेवोत्तरार्धविकल्पैस्ताडने जातानि चत्वारिंशदर्बुदानि नव कोट्यः षष्टिर्लक्षाणि।

यथा—

[4]तुह रिउरायपुरेसुं तरुणीजणलालिअम्मि [6]किंकेल्लिवणे।
संपइ अरण्णमहिसाण खंधकंडूअणं पयट्टेइ[7] वढम् ॥ १३.१ ॥

केचित्तु लघुचतुष्टयादारभ्य लघुद्वयद्वयवृद्ध्या ब्रह्मादीनि स्कन्धकान्याहुः। यथा—

बंभो हीरो कण्हो रामो चंदो पुरंदरो मेरू।
धम्मो सेलो भाणू अक्खो पण्ही[8] अ मायंगो ॥ १३.२ ॥
कालो हरी कुबेरो सालो सुवणो सुदंसणो खंदो।
नीरं सिही सुवण्णो मेहो[9] पंको अ कल्हारो ॥ १३.३ ॥

---

1) जुवईणेत्यत्र नयनलक्ष्म्याः। 'एदौतौ पदान्ते प्राकृते ह्रस्वौ वा' (छं० १.९) इति ह्रस्वत्वं ज्ञेयम्। सहजसलवणत्वेन प्रशस्यायाः चक्खुभएण। इवोत्प्रेक्षते—दृष्टिदोषविघाताय वयस्याभिः सखीभिर्दत्तं कज्जलम्। 2) षष्ठगणं विना यथेष्टमिति—यादृशाः पगणाः रोचन्ते तादृशाः क्षेप्याः यत्र तत्र वा। चगणानां मध्ये पुनः षष्ठं चगणं वर्जयित्वा। 3) भासासु विचित्तासुचि—भाषासु विचित्रासु युगपत् सुरनरतिरश्चां जीवजातीनां संवदनं संवादस्तं अनुभवन्ती जयति सर्वोत्कृष्टत्वेन प्रवर्तते वाणी भगवतो जिनेन्द्रस्य। भा १ वि २ सु ३ पञ्चमात्राः। सु १ ति २ ण ३ चगणाः। ज० पगणः। 4) तुह रिउरायेति—तव रिपुराजपुरेषु तरुणीजनलालिते कंकेल्लिवने। सांप्रतं तत्र वने वनमहिषाणां स्कन्धकण्डूयनं प्रवर्तत इति भावः।

---

१ चक्खुब्भएण दिण्णं E. २ प dropped in N. ३ जीवजाईणं A. ४ भयवओ E. ५ गीतेरर्ध० P. ६ कंकेल्लिवणे ABEKP; किंकिल्लवणे S. ७ पयट्टेइ NS. ८ पण्ही N. ९ मोहो S.

हेरंबो मीणो[1] वेण्णो[2] लहुमेएहिं सुहय नामाइं ।
एआइं साहियाइं पउणतीसाण[3] खंधाणं ॥ १३.४ ॥
चउलहुएहिं यंमो, हीरो छहिं, अट्ठहिं तहा कण्हो ।
[4]विहिं विहिं[5] वड्ढंतेहिं[6] कमेण सेसाण[7] नामाइं ॥ १३.५ ॥

एतच्च स्कन्धकप्रस्तारेष्वन्तर्भूतमिति न पृथग् लक्ष्यते । एवं भेदपरिकल्पने[8] ह्यतिप्रसङ्गः स्यादिति ॥ १३.५ ॥

[1]तत्पष्ठे ल्युपात् ॥ १४ ॥

तत्स्कन्धकमर्धद्वयेऽपि षष्ठे गणे एकस्मिन्नेव लघौ सति उपात्परं स्कन्धकमुपस्कन्धकमित्यर्थः । यथा –

[2]उअ खंधाहइतुट्टंतयाहुदंटो वि को वि सुहडओ ।
एसो सहि परजोहं पहरइ पाएण दट्ठाहरओ[9] ॥ १४.१ ॥

अत्र षष्ठस्य गणस्य लघुत्वेनैकत्वात्पूर्वार्धे द्वात्रिंशत्सहस्रास्तावद्भिरेवापरार्धविकल्पैस्ताडने जातानि दशार्बुदानि द्वे कोट्यौ चत्वारिंशल्लक्षाः ॥ १४.१ ॥

आद्येऽर्धे उदः ॥ १५ ॥

आद्येऽर्धे षष्ठे लि उदः परं स्कन्धकं उत्स्कन्धकमित्यर्थः । यथा –

[3]जा बलमैडप्फरेणं[11] निवाण उक्खंधया आसि पुरा ।
सा तुह सासणभारं वाण वहंताण संपयं कह वि गया ॥ १५.१ ॥

अत्र पूर्वार्धविकल्पानां[10] द्वात्रिंशत्सहस्राणामपरार्धविकल्पैश्चतुःषष्टिसहस्रैर्घाते जातानि विंशतिरर्बुदानि[4] चतस्रः कोट्योऽशीतिर्लक्षाः ॥ १५.१ ॥

अन्त्येऽवात् ॥ १६ ॥

अन्त्येऽर्धे षष्ठे लि अवात्परं स्कन्धकमवस्कन्धकमित्यर्थः[12] । यथा[13] –

[5]पवणपहल्लिरपल्लवधयवटमुल्लसिअ[14]कोइलावंदिरवं ।
ओ खंधावारं विअ पेच्छ[15] वणं रइवइनरिंदस्स ॥ १६.१ ॥

पूर्ववद्विकल्पाः ॥ १६.१ ॥

1) 'तत्पष्ठे ल्युपात्' इति सूत्रे षष्ठगणस्थाने एकस्मिन्नेव लघुन्यक्षरे सतीति भावार्थः । 2) उअ खंधाहय(इ)त्ति – पश्य स्कन्धाहतितुट्यद्बाहुदण्डोऽपि सुभटः एष परयोधं प्रहरति पादेन रोषेण दष्टाधरकः । 3) जा बलेत्यत्र या बलदर्पेण नृपाणां ऊर्ध्वस्कन्धता आसीत् पूर्वं सा तवाज्ञाभारं तेषां वहतां सांप्रतं कुत्रापि गता । 4) विंशतिरर्बुदानीत्यादि २०४८०००००० । दशकोटिमिरेकमर्बुदं भवति । 5) पवणपहल्लिरेत्यत्र पहल्लिरेति – कम्पनशीलवाचको देश्यः । ध्वजपटम् । ओ सूचनायाम् । कटकमिव पश्य वनं कन्दर्पनरेन्द्रस्य ।

१ नीणो AEN; भीणो C. २ वण्णे N. ३ एउण० B; पउण N. ४ विहुल्हु० A. ५ विहु विहु A. ६ वड्ढंतेहिं AD; वड्ढंतेहिं N. ७ सेसाइं A. ८ भेदविकल्पने P. ९ दढाहरओ N. १० पूर्वार्धद्वात्रिं० N. ११ मप्फुरेणं S. १२ स्कन्धमि० B. १३ यथा dropped in P. १४ टल्लमिय S. १५ पिच्छ ABE; पच्छ DN.

गीतिस्कन्धके संकीर्णम् ॥ १७ ॥

पूर्वार्धे स्कन्[1]धकमपरार्धे गीतिः यद्वा पूर्वार्धे गीतिरपरार्धे स्कन्धकमित्युभयथापि संकीर्णं[2] नाम स्कन्धकम् । यथा—

[1]जह जह तुह पहु सेन्नं किज्जइ[4] संकिण्णयं मयगलघडाहिं ।
तह तह रिउरायघरेसु खलइ लच्छि त्ति पेच्छ अच्छेरिअं[5] ॥ १७.१ ॥

[2]सा बाला तुह [6]विरहे हिअए संकिण्णए अमंताइं ।
नीसासधूमलहरि[7]च्छलेण दुक्खाइं[8] सुहय वम्मइ फुडं ॥ १७.२ ॥

[3]अत्र स्कन्धकार्ध[9]विकल्पानां गीत्यर्धविकल्पैर्घाते भङ्गद्वयेऽपि प्रत्येकं जाता एकाशीतिः कोट्यो द्विनवतिर्लक्षाः ॥ १७.२ ॥

गाथाप्यर्धे[10]ऽन्त्यगात्प्राक् चो वृद्धौ जातीफलम् ॥ १८ ॥

गाथैव पूर्वार्धेऽन्त्याद् गुरोः प्राक् चगणस्य वृद्धौ [4]जातीफलम् । उत्तरार्धं तु गाथाया एव । यथा—

[5]तुह रिउणो निवसंता[11] अविरलजाईहलेसु जलहितडवणेसु ।
वणवाससुहसइण्हा[12] न रज्जमीहंति सिविणे[13] वि ॥ १८.१ ॥

चयोगाथः ॥ १९ ॥

गाथैव पूर्वार्धेऽन्त्यगात् प्राक् चगणद्वयस्य वृद्धौ गाथः । यथा—

[6]गोरीइ[14] चिहुरभारो जलगाहोत्तिण्णिआइ[15] निवडंतथोरबिंदूहिं[16] ।
विअलिअपसूणमालाविरहदुहेणं रुअइ[17] व्व ॥ १९.१ ॥

अत्राष्टमश्चगणः पञ्चभेदो नवमो 'नौजे जः' इति चतुर्भेदोऽन्योन्याहतौ विंशतिः[18] । तथा आर्याविकल्पानां[19] गुणने जातमब्जमेकं त्रिषष्टिः कोट्यश्चतुरशीतिर्लक्षाः । एवमुद्-

1) जह जहेत्यत्र हे प्रभो यथा यथा हस्तिघटाभिः तव सैन्यं संकीर्णं क्रियते तथा तथा रिपुगृहेषु लक्ष्मीः स्खलति स्खलनं प्राप्नोति अर्थात् भ्रश्यति । अन्यत्र संकीर्णं अन्यत्र स्खलतीति पश्याश्चर्यम् । संकीर्णस्थाने स्खलने किमपि नाश्चर्यं भवति । 2) सा बालेत्यत्र सा स्त्री तव विरहे हृदये संकीर्णके अमान्ति मानाधिका(क्या)त् निःश्वासधूमलहरीकपटेन दुःखानि उद्वमति सुभग स्फुटम् । 3) अत्र स्कन्धकार्द्धेत्यत्र ६४००० । गीत्यर्द्धेति १२८०० । घाते गुणने । ८१९२००००० । 4) जातीफलमित्यत्र अत्राष्टमश्चगणः पञ्चभेदस्तेनार्याभेदानां ८१९२०००० गुणने चत्वारि अर्बुदानि षण्णवतिर्लक्षाः । स्थापना यथा ४०९६००००० । एष जातीफलस्य प्रस्तारः । 5) तुह रिउणो इत्यत्र राजन् जातीफलाकीर्णेषु समुद्रतटेषु निवसन्तस्तथा च वनवाससुखे 'सइण्हा' इति सतृष्णाः सोत्कण्ठा इति यावत् राज्यं स्वप्नेऽपि नेहन्ते इति भावः । 6) गोरी[ए] इति—गौर्याः चिकुरभारः जलगाहोत्तीर्णायाः निपतत्स्थूलबिन्दुभिः विगलितप्रसूनमालाविरहदुःखेन रुदतीव ।

१ स्कन्धमप॰ B. २ सकीर्णकं B. ३ पहु तुह P. ४ किज्जइ S. ५ मच्छरिअं A. ६ विरहो S. ७ लहरी N. ८ दुक्खाइं E. ९ स्कन्धकार्धे वि॰ P. १० आयार्धेऽन्त्या॰ F. ११ निवसतो N. १२ सइन्हा AF. १३ सुविणे वि AB. १४ गौरीए KN. १५ गाहोत्तिण्णि॰ DP. १६ थोरबिंदूहिं CDN. १७ रुयइव्व CS. १८ चतुर्विंशतिः A. १९ भेदानां E.

गाथादिष्वपि । वर्द्धमानचगणद्वयविकल्पैर्विंशत्या पूर्वपूर्वविकल्पानां ताडने विकल्पसंख्या उन्नेयाः ॥ १९.१ ॥

क्रमवृद्धयोद्विवसमुपात् ॥ २० ॥

गाथात्परं क्रमेण चगणद्वयवृद्ध्या उद्-वि-अव-सम्-उप-परो गाथो भवति । उद्गाथ-विगाथ-अवगाथ-संगाथ-उपगाथा इत्यर्थः । [1]उद्गाथो यथा—

[2]सिरिवद्धमाणजिणवर उग्गाहिंतो सुराहिवो तुज्झ अइसयसिरिं परूढरोमंचो ।
अहिलसइ मुहसहस्सं ठाणे दिट्ठीसहस्सस्स ॥ २०.१ ॥

[3]विगाथो यथा—

[4]सिरिकुमरवालभूवइ अब्भुअचरिअवण्णणं तुज्झ जो किर
करेउमिच्छइ कुसग्गतिक्खबुद्धी वि ।
बाहाहिं सो विगाहिउमिच्छइ रयणायरं सयलं ॥ २०.२ ॥

[5]अवगाथो यथा—

[6]सो जयइ अजलठाणं वायागुंफो पुराणसुकईण को वि अन्नो
चिअ सरिनाहो अकलिअमज्झो सया वि विबुहेहिं ।
जो अवगाहिज्जंतो निरंतरं देइ अमयरसं ॥ २०.३ ॥

[7]संगाथो यथा—

[8]नहकोलस्स य दाढा विक्खखुरप्पं व जलणउचिण्णमणंग-
महाभडस्स किंसुअवतंसउ व्व पुरहूअवहूविसाइ पच्चाहे ।
कणयपिसंगी हरिणंकलेहिआ सहइ उअयंती ॥ २०.४ ॥

[9]उपगाथो यथा—

1) उद्गाथो यथेति—अत्र पूर्वविधिना गुणने भेदाः ३२७६८००००००० । 2) सिरिवद्धमाणचि—उद्गाह्यमानः स्तुवन्नित्यर्थः । इन्द्रस्तव अतिशयलक्ष्मीं उत्तब्धरोमाञ्चकञ्चुकः । अभिलषते मुखसहस्रं स्थाने दृष्टिसहस्रस्य । 3) विगाथो यथेत्यत्र भेदाः ६५५३६०००००००० । 4) सिरिकुमरेत्यत्र अद्भुतचरितवर्णनं यत्र यः पुमान् किल कर्तुमिच्छति कुशाग्रतीक्ष्णबुद्ध्या बाहाभिः स पुमान् विगाहितुं वाञ्छति रत्नाकर सकलम् । 5) अवगाथो यथेति—अत्र भेदाः १३१०७२००००००००० । 6) सो जयइत्ति—स जयति अजाड्यस्थानं अजलस्थानं [वा] । वाग्गुम्फः पुराणकवीनां कोऽपि अन्य एव सरिन्नाथः समुद्रः । यः अवगाह्यमानः सन् । कैः देवैः सुधीभिश्च । अमृतरसं अमृतं पक्षे शृङ्गारादयो रसा उच्यन्ते । 7) संगाथो यथेति—अत्र भेदाः २६२१४४०००००००००० । 8) नहकोलस्स चेत्यत्र आकाशवराहस्य । इवोत्प्रेक्षते । दंष्ट्रा अथवा तीक्ष्णं क्षुरप्रं अर्धचन्द्राकारं लोहमयं बाणं अग्निमध्याक्षिप्तं कन्दर्पमहाभटस्य । अथवा पूर्वदिग्वध्वाः किंशुकप्रकरं इत्युत्प्रेक्षते । कुर्वती मृगाङ्कलेखा कनकवल्लीव शोभते । पीतरक्तयोरैक्यं कविसमये । उद्यन्ती । 9) उपगाथो यथेति—अत्र भेदाः ५२४२८८००००००००००० ।

१ भेदे-भेदानां F. २ उग्गाहिंतो AP. ३ करेउमि॰ A. ४ बुद्धीइ K. ५ बाहाहि B. ६ अजढ-ठाणं P; अजलट्ठाणं N. ७ अन्नो चिअ AS; अनु चिय P. ८ सरिणाहो A. ९ खुरप्पं व A; खुरप्पं च S. १० उत्तिण S. ११. पुरहूअ BS. १२ पिसंगी A. १३ हरिणंगले॰ A.

[1])समरम्महोअहिमुभ्भडकरिमयरं उच्छलंतरुहिरसलिलमसिवर-
दाढिआइ सहसत्ति मेइणिं उद्धरंतओ महिहराण
आकंपणाइं विरेइंतो।
उअ गाहइ चोलुक्कस्स आइकोल व्व भुअदंडो ॥ २०.५ ॥

## गाथिनी ॥ २१ ॥

उपगाथाचगणद्वयवृद्ध्या गाथिनी। यथा—
[2])सिरिमूलरायभूवइकुलगयणमिअंक तिहुअणललाम जयसिरि-
निवास जसभरभरिअदिअंत रिउभडकयंत नियकुमरवाल
भणिमो अइगहिराइं कहं तुज्झ चरिआइं।
सयलगुणगाहिणी जस्स न किर चउवयणवाणी वि ॥ २१.१ ॥

## यथेष्टं मालागाथः ॥ २२ ॥

गाथिन्याः परं यथेष्टं चगणद्वयवृद्ध्या मालागाथः। यथा—
[3])इह माला गाहाण व वयंस पेच्छसु नवंबुवाहाण गयणविउल-
सरवरम्मि विसुक्कघोरघोसाण विज्जुजीहाविहीसणाण
बहलवारिनिचयपमंथिराण अइदीहरत्ताण।
हद्धी गसइ मयंकं खेलंतं रायहंसं व ॥ २२.१ ॥

## जातीफलाद्यर्धे गाथवद् दामादयः ॥ २३ ॥

जातीफलस्य प्रथमेऽर्धेऽन्त्यगात्प्राक् क्रमेण चगणद्वयवृद्ध्या दामादयो भवन्ति। गाथवदिति यथा गाथः केवल उद्-वि-अव-सम्-उपात् परो, मत्वर्थीयान्तो, मालायाश्च पर उक्तस्तथायमपि। तत्र दामो यथा—
[4])जूहाउ व जूहाओ कड्ढिअ चोलुक्कराइणा दरिअवेरिभूवमयगलाण।
कंठे पाएसु तहा ओ दीसइ घल्लिअं दाम ॥ २३.१ ॥

1) समरमहोअहिम्मि—हे राजन् तव भुजदण्डः आदिकोड इव संग्रामसमुद्रमवगाहते। कथंभूतं समुद्रम्। उद्भटकरिरूपा मकरा यत्र तं, पुनः रुधिरमेव सलिलं यत्र, पुनः खड्गा एव दंष्ट्रा यत्र। किं कुर्वन्। उद्धरन्मेदिनीं सहसा। पुनः किं कुर्वन्। पर्वतानां राज्ञां च आकम्पनानि। 2) सिरिमूलरायत्ति—श्रीमूलराजभूपतिकुलगगनमृगाङ्क हे त्रिभुवनललाम जयश्रीनिवास यशोभरभरितदिगन्त रिपुभटकृतान्त हे नृप कुमारपाल यस्य ब्रह्मणः चतुर्वदनजापि वाणी तव चरित्राणि वक्तुं न समर्थेति वयं [कथं] भणामः। अ[इ]गहिराइत्ति—[अ]प्रकटानि। 3) इह माला गाहाणत्ति—ग्राहाणामिव क्रूरजलचरजीवानामित्यर्थः। हे वयस्य प्रेक्षस्व नूतनमेघमाला गगनरूपसरसि क्रीडन्तं चन्द्ररूपं राजहंसम्। हद्धीति—हा धिक्। ग्रसते बहलजलनिकरेण मन्दगमनशीलानाम्। विभक्त्यस्यात्र पक्षद्वये समासः कार्यः मन्थरगामिनि(ना)मिति भावः। 4) जूहाउव्वेत्यत्र। राज्ञां यूथादिव कटरचनामध्यात् आकृष्य उत्कटवैरिभूपरूपहस्तिनां कण्ठे पादे क्षिप्तं दृश्यते बन्धनम्। ओ सूचनायाम्।

१ All mss. and N. read मयरमुच्छ० against metre; P seems to read मयरमुच्छ०. २ दाढिआइ S. ३ विरयंतो ANP. ४ ओ S. ५ चोलुक्कस्स आइ dropped in A. ६ मियंग A; मयंक P. ७ विहुअण AD. ८ कह dropped in C. ९ गाहिनी S. १० पणथिराण NS. ११ मयंगं A; portion from मयंकं to the end of २२.५ not photographed in P. १२ दामादयः स्युः F. १३ जहाल्व० N. १४ रायणा A. १५ दरिआ वेरि० S; दलियवेरि AC. १६ भूत N.

उद्दामो यथा—

"[1]चालुक्क तुज्झ नयरी उद्दामसुरालयाण सिहरेसु पवणतरलेहिँ दीहरधयवडकरेहिँ ।
देइ चविलापहारं किल कलिणो ओअरंतस्स ॥ २३.२ ॥

विदामो यथा—

"[2]सिरिकुमरवाल मुचसि सरमालं जत्थ जत्थ सुहडम्मि
तत्थ तत्थ अणुमग्गलग्गो सर्यवरकए सुहस त्ति ।
मेल्लेइ सुरकुसुममयं सुरजुअइजणो वि दाम नवं ॥ २३.३ ॥

अवदामो यथा—

"[3]ओ दामाइं रयंतीइ तीइ कामस्स पूअणनिमित्तमिह तुह समागमूसवं
तद्दिअहमहिलसंतीएँ नवकुवलयच्छीए ।
कुसुमसमिद्धिविरहिअं उज्जाणं निम्मिअं सयलं ॥ २३.४ ॥

संदामो यथा—

"[4]अणुरयणि चंदकिरणफंसप्पसरंतचंदकंतसिलानीसंदामयरस-
सिंचिज्जमाणतरुतलनिसण्णरइकेलिखिन्नविज्जाहरमिहुणो ।
जिणचरणरयपवित्तो रेहइ सिरिउज्जयंतगिरी ॥ २३.५ ॥

उपदामो यथा—

"[5]सिरिमूलराय भूवइकुलगयणमिअंक तुह दिसजयम्मि दुद्धरतुरंगखुर-
पुडुक्खायमेइणीवहलधूलिपडलेण पंकिलिज्जंतसायरसलिलसयणिज्जे ।
उअ दामोअरमेण्हिं" लच्छी अइदुक्करं रमेइ ॥ २३.६ ॥

1) चौलुक्येत्यत्र चौलुक्य तव नगरी उद्दामसुरालयानां शिखरेषु पवनतरलैः दीर्घध्वजपटकरैः ददाति चपेटाप्रहारं किल कलेरवतरतः । 2) सिरिकुमरपाल हे राजन् यत्र यत्र त्वं शरमालां मुञ्चसि यस्मिन्सुभटे तत्र तत्र अनुलग्नः सुरीजनोऽपि कुसुमदाम मुञ्चति । 3) ओ दामाइं इति—ओ सूचनायाम् । रच[य]न्त्या तया कामपूजनकृते तव समागमोत्सवं च(मे)लनदिवसानभिलषन्त्या नवकुवलयाक्ष्या कुसुमसमृद्धिवि[र]हितं उद्यानं निर्मितं सकलम् । 4) अणुरयणित्ति—अनुदिनं चन्द्रकिरणस्पर्शात् प्रसरचन्द्रकान्तशिलातो निष्यन्दामृतरसेन सिच्यमानतरुतले निषण्णरतिकेलिखि(खि)न्नविद्याधरमिथुनानि यत्र सः । जिनक्रमरजःपवित्रः राजते श्री उज्जयन्तगिरिः । 5) सिरिमूलरायत्ति—हे श्रीमूलराज भूपतिकुलगगनमृगाङ्क तव दिग्जये उत्कटतुषार(तुरंग)खुरपुटोत्खातमेदिनीप्रभूतरजःपटलेन कर्दमीभवत्सागरशयनीये दामोदरसमीपे इदानीं लक्ष्मीः कष्टेन रमते ।

१ चालुक्क BD; चौलुक्क K; थालुक्क N. २ कुमरपाल AKS. ३ मिहइ D. ४ फुंस A; फुंस N. ५ खिन्न-सहरमि॰ S; खिन्नविज्जाहरमि॰ A. ६ चलण S. ७ भूअइ B. ८ मयंक CDN. ९ दिग्जि॰B. १० पुड्डस्खाइ D; पडुक्खाय D; पुडुक्खाय S; पुडरक्खय N. ११ उव ALP. १२ मिण्हिं AD. १३ दुक्करं A. १४ गमइ A.

दामिनी यथा –

[1]सिरिसिद्धरायनंदण तुमयं आयंतमिक्खिउं झत्ति धाविरीऐ इमाइ
पज्जाउलत्तवससिढिलवद्धगंठि स्हसिऊण
रमणत्थलाउ चरणग्गएसु रइअघणावेढम् ।
मणिकंचिदाम निम्मिअगइखलणं दामिणी होइ ॥ २३.७ ॥

मालादामो यथा –

[2]हंहो जुआणय तुमं मा उज्जाणम्मि भमसु जुल्लो वि अत्रहा इत्थ फुल्लिअ-
नवल्लमल्लिआवचयकोऊअपरायणाण मयविब्भलाण
कंदप्पविब्भमुब्भासिआण पोढमहिलिआण ।
दूसहकडक्खमालादामिअहिअओ न नीहरसि ॥ २३.८ ॥

इदानीं मात्राच्छन्दसां गुरुलघुपरिज्ञानार्थमाह –

[3]मात्रा वर्णोना गो[3] वर्णा गूना लः ॥ २४ ॥

यस्य कस्यापि मात्राच्छन्दसो यावत्यो मात्रा भवन्ति ता वर्णोना अक्षरैरूना गुरवो ज्ञातव्याः । तथा वर्णा गुरुभिरूना लघवो ज्ञातव्याः । तत्रायमुपयोगः । यदा कश्चित्पृच्छति अष्टात्रिंशदक्षरायां कति गुरवः कति वा लघव इति–तदा [4]सप्तपञ्चाशति शास्त्रोपदिष्टायामार्यामात्रासंख्यायामष्टात्रिंशतं वर्णसंख्यामपनयेत् अत्र येऽवशिष्यन्ते तान्गुरूनुपदिशेत् । ते चैकोनविंशतिः । वर्णेभ्यश्च गुरून्पातयित्वा शेषानेकोनविंशतिं लघूनुपदिशेत् । यथा –

1) सिरिसिद्धरायनंदणेत्यत्र हे कुमारपाल त्वां आयान्तं ईक्षितुं शीघ्रं धावमानायाः अस्याः पर्याकुलत्ववशात् शिथिलीभूतबद्धग्रन्थिः संस्रित्वा स्हसिऊण ह्लादिवर्जनात् पूर्वोऽत्र गुरुर्न भवति । रमणत्थलाउत्ति – जघनस्थलात् । यदनेकार्थसंग्रहः – 'रमणं पुनः । पटोलमूले जघने रमणो रासभे प्रिये' इति । सांप्रतं चरणाग्रतो रचितघनावेष्टं यथा स्यात्तथा रचितगतिस्खलना दामिनी पशुबन्धनरज्जुर्भवतीति । 2) हं हो जुआणयत्ति – भो भो युवन् उद्याने मा भ्रम । जुल्लो देश्योऽज्ञार्थे । यदि च गमिष्यसि तदात्र पुष्पितनूतनमल्लिकापचयने [स]कुतुकानां मदविह्वलानां कन्दर्पविभ्रमोद्भासितानां प्रौढमहेलिकानां दुःसहकटाक्षश्रेणिबद्धहृदयः सन् न निस्सरसि । न बहिरागमिष्यसीति भावः । 3) मात्रा वर्णोना इति – गो गुरवो [ लो ] लघवः । तथा वर्णा विवक्षिताक्षराणि । 4) सप्तपञ्चाशतीत्यत्र आर्या-पथ्या-विपुला-चपलादेः पूर्वार्द्धे ७ चगणा गुरुश्च तस्य मात्राद्वयं विवक्ष्यते ततो ३० मात्राः । अपरार्द्धे तु षष्ठस्य लघुत्वात् ३ हानौ २७ मात्राः । ततो द्वयोर्मीलने ५७ भवन्ति । जयति विजितेत्यत्र भाकस्मिकं भयं त्रासः । पद्मे रत्नान्तर्वर्ती दोषः । यमिते सति यमकसहिते ( इत्यार्याप्रकरणम् ) ।

१ उक्खियं B. २ धाविरीइ AB. ३ त्थलाओ D. ४ रइंअ० CN. ५ निमियगइ A. ६ भवम्र S. ७ मल्लिआचय S. ८ कोऊअ S. ९ विब्भासिआण S; १० उपोढम० N; पोडमहिलाण A. ११ अथ P. १२ गा N. १३ स्युः P. १४ ह्येयाः P. १५ तथा to ज्ञातव्या dropped in P. १६ यथा P. १७ P adds आर्यायां. Portion from आर्यामात्रासं० to तुह विरहे in २५-१ is not photographed in P. १८ सप्त A. १९ ते गुरवः P. २० शेषाः १९ लघवः P.

जयति विजितान्यतेजाः सुरासुराधीशसेवितः श्रीमान् ।
विमलत्रासविरहितस्त्रिलोकचिन्तामणिर्वीरः ॥ २४.१ ॥ इति ॥

## आर्याप्रकरणम् ।

•

**पौ चौ तो गलितकं यमितेंऽह्रौ ॥ २५ ॥**

द्वौ पञ्चमात्रौ द्वौ चतुर्मात्रावेकस्त्रिमात्रो गणो गलितकम् । अंह्रौ पादे यमिते सति । तगणो यद्यपि वर्णगणोऽप्यस्ति तथापि मात्रागणसमभिव्याहारादिह मात्रागणो गृह्यते । एवमन्यत्रापि । यथा—

[1]"गलिअंजणधवले वहइ नयणपंकए,
सुहय चयइ कालगुरुचंदणपंकए ।
सहीअणअप्पिअं दलइ च्चिअ निद्दयं,
सा तुह विरहे मालइदाम विणिद्दयं ॥ २५.१ ॥

**तृतीये षष्ठे ल्युपात् ॥ २६ ॥**

यमितेंऽह्रौ तृतीये षष्ठे च [2]"लघुन्युपात् । उपगलितकमित्यर्थः । यथा—

[3]"तुह विजयपयाणयभेरीरवडंबरं,
झत्ति निसुणिऊण पडिरवमुहंलिअंबरं ।
सज्झसेण पकंपिरस्स हरिणो करओ,
उअ गलिअमिमं खु धणुहं धरई सरओ ॥ २६.१ ॥

**समेऽन्तरात् ॥ २७ ॥**

[4]"समेंऽह्रौ यमितेऽन्तरात् । अन्तरगलितकमित्यर्थः । यथा—

[5]"उअ वयंस वित्थरिअमहूसवलच्छिअं,
रणरणंतभसलावलिअं वणराइअं ।

1) गलिअंजणेत्यत्र । निरन्तराश्रुपाताद्गलिताञ्जने सती धवले वहति नयनपङ्कजे सुभग त्यजति कृष्णागुरुचन्दनयोः पङ्कं विलेपनार्हं कर्दमम् । सखीजनार्पितं चूर्णयति निर्दयं सा तव विरहे मालतीदाम । विनिद्रकं विकसितम् । 2) लघुन्युपादिति—प्रतिपादं लघुन्यक्षरे कृते सति । 3) तुह विजयेत्यत्र तव विजयप्रयाणभेरीशब्दाडम्बरं शीघ्रं श्रुत्वा प्रतिरवमुखरिताम्बरसाध्वसेन भयेन प्रकम्पमानस्य इन्द्रस्य करात् पश्य गलितं इदम् । खुशब्दो निश्चये पादपूरणे च । धनुः धरति शरत् । 4) समेंऽह्राविति—गणाः पूर्ववत् । यमिते सयमके । 5) उअ वयंसेत्यत्र पश्य हे वयस्ये विस्तृतवसन्तोत्सवलक्ष्मीकां रणरणद्भ्रमरावलिकां वनराजिकां कवलितचिरोत्पन्नमनस्विनीमानिकां पुष्पगलितकुसुमान्तरपतितपरागिकाम् ।

१ तौ DN. २ दलइ चिअ S. ३ पिद्दयं BCDNP. ४ मुहरिअंबरं P. ५ सज्झसेण A. ६ धरइ B. ७ समे पादेऽन्तरात् H. ८ मधूसव E. ९ वणराइअ A.

कवलिअचिरपरूढमाणंसिणिमाणिअं[1],
फुलेवल्लिकुसुमंतरगलिअपराइअं ॥ २७.१ ॥

अन्ये तु प्रथमचतुर्थयोः पादयोर्यमनेऽन्तरगलितकमाहुः । यथा–

"पत्तलच्छि सुहयं जणमोहपयासयं,
गलिअनिद्दइंदीवरपत्तसहोअरं ।
सहइ तुज्झ एअं तं लोअणजुअलयं,
पत्तलच्छि सुहयंजणमोहपयासयं ॥ २७.२ ॥

**पौ चौ पो वेः ॥ २८ ॥**

द्वौ पञ्चमात्रौ द्वौ चतुर्मात्रौ एकः पञ्चमात्रश्चेद् यमितेंऽह्रौ वेर्गलितकम् । विगलितकमित्यर्थः । यथा–

"उअ महुसमओ मिउकुरिअमलयपवमाणओ,
विगलिअचिरपरूढमाणंसिणिजणमाणओ ।
कोइलाहिं कयकलगीईहिं गिज्जमाणओ,
वम्महस्स विजयम्मि सहाओ असमाणओ ॥ २८.१ ॥

**चौ पः समः ॥ २९ ॥**

द्वौ चतुर्मात्रौ पञ्चमात्रश्चैको यमितेंऽह्रौ समः परं गलितकम् । संगलितकमित्यर्थः । यथा–

"वणफलमरसं गलिअयं,
जस्स य निव्वुइदायय ।
तस्स सया वणवासिणो,
किं वण्णामि महेसिणो ॥ २९.१ ॥

**पतीगाः शुभात् ॥ ३० ॥**

एकः षण्मात्रः चत्वारस्त्रिमात्राः गुरुश्च यमितेंऽह्रौ शुभाद् गलितकम् । शुभगलितकमित्यर्थः । यथा–

---

1) पत्तलच्छि इत्यत्र पत्रलाक्षि सुभगं जनानां मोघपदं निष्फलव्यापारस्यास्पदम् । अथवा जनानां मोहपदं मोहव्यापारस्याश्रयम् । गलितनिद्रेन्दीवरपत्रतुल्यं शोभते तव पत्रलोचनयुगलकम् । मासा लक्ष्मीर्येन । सश्रीकमित्यर्थः । सुभगाञ्जनमयूखप्रकाशकम् । अथवा सुभगाञ्जनस्य मोघपदे निष्फलपदे भासकं स्थासकम् । 2) उअ महुसेत्यत्र पश्य मधुसमयोऽस्ति मृदुस्फुरितमलयपवमानो विगलितचिरप्ररूढमनस्विनीमानकः कोकिलाभिः कृतकलगीतिभिः गीयमानः कन्दर्पस्य विजये सहायः । असमानो निरुपमः । 3) वनफलं नीरसं भूमिपतितं यस्य च निर्वृतिदायकं सन्तापिद्रम् । तस्य सदा वनवासिनः किं वर्णयामि महर्षेः ।

---

१ माणभं B. २ फुल्लवेल्ल …पराइवं A. ३ यमितेऽन्तर॰ यमितादुर्यथा A. ४ गलिअनिद्दभंदीवर A; गलिअनिद्दभं इंदी॰ D. ५ Portion from जणमोह॰ to समगलित in १२ com. is not photographed in F. ६ अंह्रौ । गलितकं पेडसविभाः आमलितरकरमसनातेः F. । ७ सहाउ S. ८ वण-फलमरसम॰ M. ९ निव्वुइदायं D.

"पुणरवि निअरज्जसिरि[1]सुहगलिआसया,
पव्वयकंदरेसु निवसंतया[2] सया।
पहु तुह रिउणो धरंतया मुणिव्वयं,
पुणो पुणो वि हु उवालहंति दिव्वयं ॥ ३०.१ ॥

**चः पौ चौ तः समात् ॥ ३१ ॥**

एकश्चतुर्मात्रो द्वौ पञ्चमात्रौ द्वौ चतुर्मात्रौ एकस्त्रिमात्रो[3]ऽन्त्यौ यमिते समाद् गलितकम्। समगलितकमित्यर्थः। यथा–

"दुद्धरवारिवुड्ढि[4]घोरा चलविज्जुलभीसणा,
सेलगुहंतरालपडिसद्दिअदुगुणिअनीसणा।
जाव ससुत्थरंति मेहा पिहिअंबर[5]देसया,
पहिआ[6] ताव हुंति जंबूफलसम गलिआसया[7] ॥ ३१.१ ॥

**तदोजे चतौ मुखात् ॥ ३२ ॥**

तदेव समगलितकमोजपादयोः चगणतगणौ चेत्तदा मुखाद् गलितकम्। मुखगलितकमित्यर्थः। यथा–

"सयवत्तयं,
मुहगलिअमहु[8]करसुरहिअजलमलिसयवत्तयं।
वम्मंगओ,
चावम्मि ठवेविणु करस य न हु हंत[10] मणं गओ[9] ॥ ३२.१ ॥

**षाच्चनौ जे जः समे जो लीर्वा मालायाः ॥ ३३ ॥**

षण्मात्राद् गणात्परे दश चगणा न विषमे जः समे जो "लघुचतुष्टयं वा यमितेऽन्त्यौ मालाया गलितकम्। मालागलितकमित्यर्थः ॥ यथा–

1) पुणरविति–पुनरपि। निजराज्यश्रीसुखगलिताशयाः पर्वतकन्दरेषु निवसन्तः सदा हे प्रभो तव रिपवो धरन्तः मुनिव्रत पुनः पुनर्निश्चयेन उपालभन्ते दैवम्। 2) दुद्धरवारिति–दुर्धरवारिवृष्टिघोराः चलविद्युद्भीषणाः शैलगुहान्तरालप्रतिशब्दितद्विगुणितनिःस्वनाः यावद्विस्तरन्ति मेघाः पिहिताम्बरदेशकाः पथिकास्तावद्भवन्ति जम्बूफलसमगलिताशकाः। जम्बूफलानां समाः सन्तः गलिता आशा यान्त्या येषां पक्षे गलितानि कथितानि आशयानि येषां नष्टमध्यानि। तदा हि तानि क्रयन्ते। अथवा जम्बूफलसमा भव एव गलिता पतिता आशा येषाम्। वर्षाकालेन जम्बूफलानि पतन्ति। 3) सयवत्तयमित्यत्र शतपत्रकं मुखगलितमकरन्दौघसुरभितजलं मलीनो शतानि तेषां वर्तकं जीवकम्। तदनङ्गः चापे संस्थाप्य कस्य न हु निश्चितं हन्ति मनो गतः। 4) लघुचतुष्टयं वेति–पादचतुष्टयेऽपि विषमस्थाने तृतीयपञ्चमसप्तमनवमैकादशलक्षणे जगणो न स्यात्। तथा समे द्वितीयचतुर्थषष्ठाष्टमदशमलक्षणे जगणो लघुचतुष्टयं वा भवति सर्वेषु पादेषु।

१ सिरिसुह॰ N; –सुहपलियआसया A. २ निवसतवा सया B; सया dropped in D. ३ त्रिः N. ४ वुद्दि B; वुड्ढि N. ५ पिहिहिअवर A. ६ पहिआ॰ N; पहिअतोव हुंति A. ७ गलिअआसया A. ८ मुहगलियमं महु॰ A; मुहगलिअमहु॰ D. ९ तवणं गओ N. १० हंति CK.

[1]खेलिरकामिणीकराहयअविरलविअसिअजलरुहमालागलिअपरायसुरहिअसलिलयं,
तरलतरंगगंगपरिनंच्चिरकलहंसमिहुणावलिसरहसकिज्जमाणकलयलकलिलयं ।
अब्भंलिहवडपरिरूढवहलवउलतिलयतमालतालीयणपडिहयखरदिणयरकरयं,
पिच्छ सरोवरं इममणारयं पि विज्जाहरसुरवरकिन्नराण एकं विलासहरयं ॥ ३३.१ ॥

चूर्गन्तो मुग्धात् ॥ ३४ ॥

पगणात्परे अष्टौ चगणा गुर्वन्ताः । नौजे जः समे जो लीर्वा यमितेऽष्टौ मुग्धाद् गलितकम् । मुग्धगलितकमित्यर्थः । चूः इत्यस्य गन्तत्वेन विशेषणादन्त्यश्चगणो गुर्वन्तो लभ्यते । न तु पृथगेव गुरुः । अन्यथा चूगाविति कुर्यात् । यथा—

[2]नमिरसुरासुरिंदसिररयणमउडरुइभरकरंबिअचरणकमलनहमणि,
सयलतिलोअलोअलोअणविहुरणमोहंधयारनिअरविहडणनहमणि ।
न नवसि जइ जुआइजिणइंदममलकेवलसिरिकुलहरमिह भवभयहणणं,
ता वयंस तुह रयणं चिअ कराउ मुद्ध गलिअं किर विहलमिदं खु जणणं ॥ ३४.१ ॥

चूरुग्रात् ॥ ३५ ॥

पात्परे षट् चगणा गन्ताः । नौजे जः समे जो लीर्वा यमितेऽष्टौ उग्राद् गलितकम् । उग्रगलितकमित्यर्थः ॥ यथा—

[3]निम्मलनाणदिट्ठिअवलोइअभुवणयलं विसुद्धचित्तं,
उग्गगलिअसमग्गकम्मं निरवहिनाणरइअजगचित्तं ।
वीरं संभरामि तारणतरंडयं समपसमसोहं,
पडिओ दुत्तरस्स भवसायरस्स लहरीभरम्मि सोहं ॥ ३५.१ ॥

1) खेलिरकामिणीत्यत्र क्रीडनशीलकामिनीकराभिहताविरलविकासितजलरुहमालागलितपरागसुरभितसलिलकम् । तरलतरङ्गेन परिवर्तनशीलहंसमिथुनावलीना सरभस क्रियमाण कलकलशब्दविशेषस्तेन कलिलकम् । अभ्रंलिहतटाभिरूढमहलबकुलतिलकतमालतालीवनेन प्रतिहतकठिनदिनकरकरा यत्र । स्वार्थे के करकम् । पश्य सरोवर इद अनारत विद्याधरसुरकिन्नराणा एक विलासगृहम् । 2) नमिरसुरेत्यत्र नम्रसुरासुरेन्द्रशिरोरत्नमुकुटरुचिभरकरम्बितमिश्रितक्रमकजनखमणि सकलत्रिलोकलोचनानां पीडनशीलमोहान्धकारनिकरविघट्टने नभोमणि सूर्यम् । न नमसि । रुदनमोयं इति मस्य व । यदि युगादिजिनेन्द्र अमलकेवलश्रीकुलगृह भवभयहननं तत् वयस्य तव रत्न एव करात् हे मुग्ध गलित किल विफलमिद निश्चित जननम् । 3) निम्मलनाणेत्यत्र निर्मलज्ञानदृष्ट्यवलोकितभुवनतल विशुद्धचित्तम् । उग्र सत् गलित समग्रं कर्म यस्मात् । निरवधिज्ञानरचितजगच्चित्र जगच्छब्देन जगत्स्था जना गृह्यन्ते आधाराधेययोरभेदोपचारात् । वीर चरमजिन स्मरामि तारणयानपात्रम् । सर्वप्राणिषु समा मध्यस्था अत एव प्रसन्ना शोभा यस्य । अथवा शमेन उपशमेन प्रसन्ना । पतितः दुस्तरस्य भवसागरस्य लहरीभरे सोऽहम् ।

१ जलरुहे S २ सुरहिअ S, सुहहिअ B. ३ परिणच्चिर A. ४ सयसहसकि० S, सरहकि० A. ५ वहलबहुल S. ६ दिणयरकय S. ७ एक A, एव V. ८ अन्त्यश्चो गान्तो न तु P. ९ सिरिरयण C. १० चलण P. ११ लोअ dropped in DAV, विहुरण V, विहरण B १२ निअर dropped in D. १३ जिणयदमनल BP, मलकेवल to 38 com. dropped in P. १४ हरण S. १५ गलितमुग्ग० A. १६ निम्मल A. १७ भुवणलय B. १८ समग्ग DP, समग्ग N. १९ तरंडयसम० A. २० पडिओ CN, १९ छन्दो०

**पौ तः सुन्दरा ॥ ३६ ॥**

द्वौ पञ्चमात्रौ त्रिमात्रश्चैको यमितेंऽह्रौ सुन्दरा नाम गलितकम्। नौजे जः समे जो लीर्वेति निवृत्तम्। यथा–

[1]नरवरिंद तुह किंत्तिआ,
कत्थ कत्थ न पहुत्तिआ।
भरिअगयणमहिकंदरा,
कुंदसंखससिसुंदरा ॥ ३६.१ ॥

**पौ तौ भूषणा ॥ ३७ ॥**

[2]द्वौ पञ्चमात्रौ द्वौ त्रिमात्रौ यमितेंऽह्रौ भूषणा नाम गलितकम्। यथा–

[3]पिच्छ पीवरमहापओहरा,
कस्स कस्स न वयंस मणहरा।
विप्फुरंतसुरचावकंठिआ,
भूसणा नहसिरी उवट्ठिआ ॥ ३७.१ ॥

**चपचापचार्लौ मालागलिता ॥ ३८ ॥**

चतुर्मात्रः पञ्चमात्रः चतुर्मात्रद्वयं पञ्चमात्रः चतुर्मात्रद्वयं लघुगुरू चँ मालागलिता। यथा–

[4]न मुणिज्जइ गलाउ रयणमाला गलिइआ न गणिज्जइ भगओ,
मणिवलयनिअरो न य जाणिज्जइ अंसुअंचलो वि हु विलग्गओ।
चौलुक्ककुलंबरदिणमणि तुह अवलोअणनिमित्तधावंतिहिं,
मयरद्धयबाणघोरणिविद्धहिअइहि नारिहि हरिसिज्जंतिहि ॥ ३८.१ ॥

**पञ्चीः समे जो लीर्वा विलम्बिता ॥ ३९ ॥**

एकः षण्मात्रश्चचतुष्टयं च। तथा समे स्थाने जगणो लघुचतुष्टयं वांह्रौ यमिते विलम्बितागलितकम्। यथा–

1) नरवरिंदेत्यत्र हे नरवरेन्द्र तव कीर्तिः कुत्र कुत्र न प्राप्ता भृतगगनमहा(ही?)गुहा कुन्दशङ्खशशिसुन्दरी। 2) द्वौ त्रिमात्रौ इत्यत्र अत्र तावत् तगणद्वयस्य स्थाने यगण. ऽऽ॥ एवंविधः क्षेप्यते तदा तगणद्वयव्यवहारो न भवति। अतः पृथग्ग्रहणम्। एवमन्यत्रापि ज्ञेयम्। 3) पिच्छ पीवेत्यत्र पश्य पीवरमहापयोधरा कस्य कस्य न हे वयस्य मनोहरा विस्फुरत्सुरचापकण्ठिकाभूषणा नभसः श्रावणमासस्य गगनस्य च श्रीः सा उपस्थिता प्रकटिता। 4) न मुणिज्जइ गलाउत्ति–न ज्ञायते गलात् रत्नमाला गलिता न गण्यते भ्रमद्भोऽपि मणिवलयनिकरो न च ज्ञायते अंशुकाञ्चलोऽपि विलग्नकः कण्टकादौ। हे चौलुक्यकुलाम्बरदिनमणे कुमारपाल तवालोकननिमित्तं धावन्तीभिर्मकरध्वजबाणविद्धहृदयाभिर्नारीभिर्हर्षन्तीभिः।

१ सुन्दराउ N; सुन्दराः D. २ पेच्छ BEP, पीच्छ N. ३ कंत्तिआ S. ४ चामला EN. ५ F adds यमितेंह्रौ after च. ६ जानिज्जइ A. ७ चाउक्क BCDP. ८ धावंतहिं A. ९ चयणयद्ध॰ CDP.

"[1]मसिसब्बंभयारि[1] घणतिमिरमालिआओ,
उअह[2] समुल्लसंति दुव्वारमालिआओ ।
वासयपंजरेसु सुत्ताओ सारिआओ,
तह अविलंबिआओ[4] जंति अहिसारिआओ[5] ॥ ३९.१ ॥

**गन्तचः पञ्चुपाः खण्डोद्गतम् ॥ ४० ॥**

गुर्वन्तश्चतुर्मात्रः पञ्चमात्रः चतुर्मात्रपञ्चकं पञ्चमात्रश्च । समे जो लीर्वा खण्डोद्गतम् । यथा –

"[2]खंडुग्गयमिंदुबिंबमिणमज्जवि[6] अहिणवकिंसुअकुसुमसरिसयं,
न हु जा चंदिमाइ तिमिरभरं किर परिदलिऊण पयडइ हरिसयं ।
घम्मीसरभडस्स सरनिअरेहिं अइदूसहेहिं पहरिज्जंतओ,
अहिअं सा संपइ अहिसरणे[7] पयट्टइ जुवइजणो तुरंतओ ॥ ४०.१ ॥

**चर्पाचीपाः प्रसृता ॥ ४१ ॥**

चतुर्मात्रः पञ्चमात्रद्वयं चतुर्मात्रचतुष्टयं पञ्चमात्रश्च प्रसृता । यथा –

"[3]जं किर मुद्धिआइ तीए अहिणवमहुसमयलच्छितुवरिज्जंतओ,
पसरिअमलयमारुओ न हु सुहाइ तुह विरहंमि सुरूवे छिवंतओ ।
तस्स य चिंतिऊण पडिखलणकारणं किरइ रुद्धनहयलपहाओ,
किर उण्हुण्हिआओ[10] घणनीससिअसमीरलहरीओ अइदूसहाओ ॥ ४१.१ ॥

**चुर्दो नौजे जो लम्बिता ॥ ४२ ॥**

पञ्च चतुर्मात्राः द्विमात्रश्चैको नौजे जगणश्चेल्लम्बितागलितकम् । यथा –

"[4]कइलाससतुलणपयडिअबहुवाहपएणं,
संजणिअतिअसमंडलबहुयाहपएणं ।

1) मसिसब्बंभयारीत्यत्र मषीसब्रह्मचारिघनतिमिरमालिकाः पश्यत समुल्लसन्ति दुर्वारं यथा स्यात्तथा । हे आलिकाः सख्यः वासकपञ्जरेषु सुप्ताः शारिकाः । तथा अविलम्बिताः त्वरिताः यान्ति । याः कामाक्रान्ताः स्वयं भर्तारं प्रतिव्रजन्ति ता अभिसारिका उच्यन्ते । 2) खंडुग्गयमित्यत्र । अर्धोद्गतं चन्द्रबिम्बं इदं अद्यापि अभिनवकिंशुककुसुमसदृशं न निश्चितं यावत् चन्द्रिकया तिमिरभरं किल परिदाल्य प्रकटयति हर्षम् । घम्मीसरशब्दो देश्यः कामवाचकः । एष भटस्तस्य बाणनिकरैः । कथंभूतैरतिदुःसहैः । ताड्यमानः अधिकं यथा स्यात्तथा तस्मात्सम्प्रति अभिसरणे भर्तुर्युवतिजनः प्रवर्तते त्वरमाणः । 3) जं किर मुद्धिआइ इत्यत्र हे सुभग यस्मात्कारणात् । किलेति निश्चये । तस्या मुग्धिकायाः तव विरहे मलयमारुतः छिवन्निति अङ्गे लगन्नपि न सुखायते । कथंभूतः । अभिनववसन्तलक्ष्म्या त्वरमाणः । तस्मात्कारणात् तत्प्रतिस्खलनकारणं ध्यात्वा रुद्धनभस्तलपथाः उष्णोष्णिका अत्युष्णा अतिदुःसहाः निश्वासवायुलहरीः करोति (किरति?) । 4) कइलाससतुलणेत्यत्र कैलासतोलने प्रकटितं बहुतरं बाहापदं बाहाव्यापारो येन संजनितत्रिदशमण्डलवधूबाष्पपयसा आलम्बिशक्यकारणदशास्येन । वणे इति निश्चये । नीता सीता दशास्येन वने कानने ।

१ सब्बम्भमारि A; सबंभयारि E; सम्बम्भयारि DX. २ ओअह BDX. ३ The line is dropped in D. ४ अवलंबिआओ AC. ५ अहिसारिओ C. ६ खंडुग्गय DF. ७ अइसरणे B. ८ चराः चीराः B. ९ धम्म A. १० उण्हुण्हिआओ B.

आलंविअखयकारणदसासएण वणे,
नीआ सीआ तेणं दसासएण वणे ॥ ४२.१ ॥

**सौजे पैर्विच्छित्तिः ॥ ४३ ॥**

सैव लम्बिता ओजे पगणैः विच्छित्तिर्गलितकमंह्रौ यमिते । यथा–

[1]रणरणंति जत्थ पमत्ता कुसुमेसु सिलीमुहा,
होंति जत्थ लोअदूसहा कुसुमेसुसिलीमुहा ।
विच्छित्तियरो वरुणिअणो विणा वि हु महु समओ,
विब्भमइ जत्थ सँमुत्थरइ एस इह महुसमओ ॥ ४३.१ ॥

**चापचपदा ललिता ॥ ४४ ॥**

चद्वयं पचपदाश्चांह्रौ यमिते ललितागलितकम् । यथा–

[2]मत्तमयरपुच्छच्छटोहँभग्गवणराइअं,
तीरसहंतलयंगलवलिकणइचवँणराइअं ।
नहमंडलगरुअनिरंतरविविहघणगालयं,
उअहिं पेच्छ ललिअंगत्ति एअं घणवालयं ॥ ४४.१ ॥

**उभे विषमा ॥ ४५ ॥**

उभे विच्छित्तिललिते ललिताविच्छित्ती वा संकीर्णे विपमांगलितकमंह्रौ यमिते । यथा–

[3]तरलं दीहत्तणेणं पाविअकण्णमग्गं,
विसमत्थमोहसायरे करेइ कं ण मग्गं ।
एअं तुह नयणजुअलयं सुंदरि कालसारं,
सोहाविणिज्जिअलोअणं निंदइ कालसारं ॥ ४५.१ ॥
अत्र पूर्वार्द्धे ललिता अपरार्द्धे विच्छित्तिः ॥ ४५.१ ॥

---

1) रणरणन्ति शब्दं कुर्वन्ति यत्र प्रमत्ताः पुष्पेषु भ्रमरा भवन्ति यत्र लोकदुःसहाः कुसुमेषोः कामस्य बाणाः। विच्छित्तिः पत्रभङ्गादिरचना तस्याः परायणः तरुणीजनो विनापि मधु मद्यं समदः मदसहितः विभ्रमति यत्र विस्तरति एप स इह मधुसमयः। 2) मत्तमयरपुच्छेत्यत्र उदधिं पश्येति सदङ्कः। कथंभूतम्। मत्तमकर-पुच्छच्छटाघेन भग्ना वनराजिका यत्र सः तथा तम्। तीरे राजमाना लवङ्गलवल्यां कणद्रुचि वल्लिविशेषश्च यासां घने राजितं सत एतयोर्द्वन्द्वः (?)। नभोमण्डले ये गुरुका निरन्तरा विविधा घना मेघास्तेषां पालकं वर्तकम्। मेघानां हि समुद्रादेव वृत्तिभवनात्। घना व्याला जलचरसर्पा यत्र स तथा तम्। 3) तरलं दीहत्ति – हे सुन्दरि इदं नयनयुगलकं चञ्चलं दीर्घत्वेन प्राप्तकर्णमार्गं विषमार्थमोहसागरे करोति कं न मग्नम्। एतच्च कालगुणेन सारं प्रधानं किं च शोभाविनिर्जितं लोचनं यस्य स तं कृष्णसारं हरिणं निन्दति।

---

१ सिली॰ AE २ The line is dropped in D. ३ लोहदूसहा ४. ४ छिली॰ E. ५ तुरणि-अणो D. ६ विणा dropped in D. ७ समुत्थरइ A. ८ च्छटोहम॰ DP, च्छटाभ॰ BE. ९ राइअं A. १० वणराइ dropped in s, वणराइअ A. ११ पिच्छ E. १२ ललिअंगत्ति A. १३ पत्र B. १४ विस-मग॰ B, विषमालगितक॰ A.

**तीचौ मुक्तावली ॥ ४६ ॥**

चत्वारस्त्रिमात्राश्चतुर्मात्रश्चैको मुक्तावलीगलितकम् । यथा—

[1]चंदणयं पिहु न हु सा सहए,
गंडयलं करकलिअं वहए ।
धरइ न मुत्तावलिअं हिअए,
तुज्झ तणुं[1] चिअ लिहिअं निअए ॥ ४६.१ ॥

**पिचौ रतिवल्लभः ॥ ४७ ॥**

त्रयः पञ्चमात्राः चगणश्चैको रतिवल्लभो गलितकम् । यथा—

[2]दीसए एस तरुणिअणदुल्लहओ,
पच्चक्खतणू चेव रइवल्लहओ ।
जो भणइ मयणो हरेण परिअड्ढो,[2]
सो मामि[3] जणो निच्छईण[4] अविअड्ढो ॥ ४७.१ ॥

**पौ चपौ हीरावली ॥ ४८ ॥**

द्वौ पञ्चमात्रौ चतुर्मात्रपण्मात्रौ च हीरावलीगलितकम् । यथा—

[3]कुवलयदलनयणे पयावइणा कयं,
बहुरयणमयं[5] पिव तुह वयणपंकयं ।
जंरिस[6] मणहरदसणाहरकुंतलया,
हीरावलिविहुमदलइंदनीलया[7] ॥ ४८.१ ॥

दण्डकापादिभ्योऽन्यच्च सयमकं गलितकमित्येके[8] ॥ ४८.१ ॥

**गलितकप्रकरणम् ।**

*

**गलितकमेवायमकं सानुप्रासं समांह्रि खञ्जकम् ॥ ४९ ॥**

पूर्वकाण्येव[9] गलितकानि यमकरहितानि सानुप्रासानि यदि सर्मन्ति[10] तदा खञ्जक-संज्ञानि[11] ॥ ४९ ॥

1) चंदणयं (णयं) पि हुत्ति—चन्दनं सा न सहते अर्थादङ्गे । तथा गण्डतलं कपोलभागं करतलगतं वहते शोकाकुलत्वात् । धरति न मुक्तावलिकां हृदये तव तनुमेव लिखितां पश्यते । हृदये कीदृशे । निजके । 2) [दीसइत्ति—] दृश्यत एष तरुणीजनानां दुर्लभः प्रत्यक्षतनुः निश्चयेन रतिवल्लभः । य एवं वक्ति 'ईश्वरेण परिदग्धः' स पुमान् मामि मन्ये निश्चयेनाविदग्धकः । मूर्ख इत्यर्थः । 3) कुवलयेत्यत्र हे कुवलयदलनयने ब्रह्मणा बहुरत्नमयमिव कृतं तव वदनपङ्कजं यस्मिन्मनोहरदशनाधरकुन्तलकाः सन्ति । कीदृशाः । हीरावलिविद्रुम-दलेन्द्रनीलका इवेत्यर्थः । इति गलितकप्रकरणम् ।

१ तणुं चेअ B. २ परिअड्ढो D. ३ सामि N. ४ मिच्छइण NS; निच्छएण E. ५ बहुरयणमयं D. ६ रंजरिं S. ७ विहुमदल B; ८ इत्यन्ये A. इति dropped in P. ९ पूर्वाण्येव F. १० स्युः XP. ११ खञ्जकनामानि A.

खञ्जकविशेषानाह—

तौ चितगाः खञ्जकम् ॥ ५० ॥

त्रिमात्रगणद्वयं चतुर्मात्रत्रयं त्रिमात्रो गुरुश्चायमकं सानुप्रासं खञ्जकम् । यथा—

[1])मत्तमहुअमंडलकोलाहलनिब्भरेसुं,
उच्छलंतपरहुअकुडुंबपंचमसरेसुं ।
मलयवायखंजीकयसिसिरपयौ घणेसुं,
विलसइ का वि चित्तसमयंमि सिरी वणेसुं ॥ ५०.१ ॥

पचपचपा महातोणकः ॥ ५१ ॥

पञ्चमात्रचतुर्मात्रपञ्चमात्रचतुर्मात्रपञ्चमात्राश्चेन्महातोणकः । यथा—

[2])तुह पयावेण वि दुवदूसहेण मह्विलए,
दड्ढे रिअवेरिमंडलेण इह पसाहिए ।
महातूणयदरिविवरमज्झंमि अहोमुहा,
लज्जिअव्व ठिआ नरनाह तुज्झ सिलीमुहा ॥ ५१.१ ॥

चौगौ सुमङ्गला ॥ ५२ ॥

चगणचतुष्टयं गुरुश्च सुमङ्गला । यथा—

[3])चीणं चएसु निवसेसु कंबलं,
चालुक्करायमणुसर महाबलं ।
मूढ वहसु मा माणविसयंघलं,
अप्पाणयस्स चिंतेसु मंगलं ॥ ५२.१ ॥

चौ पः खण्डम् ॥ ५३ ॥

चतुर्मात्रद्वयं पञ्चमात्रश्च खण्डं नाम खञ्जकम् । यथा—

[4])नच्चाविअचंदणेरणो,
मक्कविअमहुअरगणो ।

---

1) मत्तमहुअमंडलेत्यत्र उन्मत्तभ्रमरश्रेणिकोलाहलेन व्याप्तेषु, उच्छलत्कोकिलकुटुम्बस्य पञ्चमस्वरो येषु तेषु, मलयवायुखञ्जीकृतशिशिरपदा लक्षणया निरस्तः शिशिरस्य ऋतोः पदं व्यापारो यया सा, निबिडेषु विलसति कापि चैत्रसमये श्रीः शोभा वनेषु । 2) तुह पयावेणेत्यत्र तव प्रतापेनापि दवदुःसहेन दग्धप्र- वैरिमण्डलेन महीवलये [प्र]साधिते सति । तूणको भस्त्रकः स एव दरी गुहा [ तस्याः ] विवरमध्ये अधोमुखाः लज्जिता इव नरनाथ बाणास्तिष्ठन्ति । 3) चीणं चएसु इत्यत्र चीनांशुकं त्यज परिधेहि कम्बलं कुमारपाल- मनुसर । हे मूढ मानं मा वह विह्वलं त्वं विह्वलं वा । आत्मनश्चिन्तय मङ्गलम् । 4) नच्चाविअत्ति । अत्र नर्तितचन्दनवनो मन्दं भ्रामितमधुकरगणः खण्डितमनस्विनीमानको वाति दक्षिणः पवनः ।

---

१ मत्तमहुअरमं० A. २ कुडुंब D; कुडंब CS; कुडंब BE. ३ सिसिरपया A; सहिरपसा E. ४ महातोणः F. ५ दड्ढरिव A. ६ ठिआ F. ७ चेलुक्क AN. ८ मा dropped in s. ९ नंदण- वणो A. १० माहुअर० A.

खंडिअमाणिणिमाणओ,
वाअइ दाहि[१]णपवणओ ॥ ५३.१ ॥

**पचता उपात् ॥ ५४ ॥**

पण्मात्रः चतुर्मात्रः त्रिमात्रश्च उपात्ख[२]ण्डकम् । उपखण्डकमित्यर्थः । यथा–

[1]साहीणो चित्तण्णुओ,
पणओ खंडिअमन्नुओ ।
माए पय[३]रणदुल्लहो,
कं[४]तो लब्भइ वल्लहो ॥ ५४.१ ॥

**पश्चौ खण्डिता ॥ ५५ ॥**

एकः पण्मात्रो द्वौ चे[५]तुर्मात्रौ खण्डि[६]ता । यथा–

[2]उज्जा[७]गरकसायनयणं,
हिअयलग्गअलत्तयचलणं[८] ।
खंडिआइ दट्ठूण पिअं,
मरणंमि हिअयं निहिअं ॥ ५५.१ ॥

**त्रयोऽप्यवलम्बकः[९] ॥ ५६ ॥**

त्रयोऽपि खण्ड-उपखण्ड-खण्डि[१०]ता-भेदाः प्रत्येकमवलम्बकसंज्ञाः । [3]संज्ञाप्रयोजनं द्विपदीखण्डे ॥ ५६ ॥

**पश्चौ युग्जो लीर्वा हेला ॥ ५७ ॥**

पण्मात्रः चतुर्मात्रचतुष्टयम् । तथा युक् समस्थानगतो जो लीर्वा हेला । यथा–

[4]कोअंडं पसूणरइअं गुणो महुअरा,
बाणा कामिणीण नयणा विला[११]सगहिरा ।
सयमतणू[१२] जडो सहयरो तुसारकिरणो,
हेलाए तहावि भुवणं जिणेइ मयणो ॥ ५७.१ ॥

1) साहीणो चित्तेत्यत्र स्वाधीनः चित्तज्ञः । पणओ स्नेहलः । खण्डितमन्युकः मयि सकोपे सति इति शेषः । हे मातः प्रकरणे उत्सवसमये दुर्लभः परदेशगतत्वात् । कुतो लभ्यते वल्लभः । 2) उज्जागरेत्यत्र निद्राभावेन कषायनयनं हृदयलग्नालक्तकचरणं परस्त्रीपादप्रहारात् खण्डितया दृष्ट्वा प्रियं मरणे हृदयं निहितम् । निद्राकषायमुकुलीकृतताम्रनेत्रो, नारीनखव्रणविशेषविचित्रिताङ्गः । यस्याः कुतोऽपि गृहमेति पतिः प्रभाते, सा खण्डितेति कथिता कविभिः पुराणैः । 3) संज्ञाप्रयोजनमित्यत्र एतेषां त्रयाणामप्युदाहरणानां अवलम्बक इति संज्ञा । अस्याः अवलम्बकसंज्ञायाः प्रस्तावो द्विपदीप्रकरणेऽग्रे । उदाहरणं रत्नावलीसभवं यथा– कुसुमाउहपिअदूअयं इत्यादि ज्ञेयम् । 4) कोअंडं पसूणेत्यत्र कोदण्डं प्रसूनरचितम् । गुणः प्रत्यञ्चा मधुकराः । बाणाः कामिनीनां नयनानि विलासगभीराणि । स्वयमतनुः जडः सखा तुषारकिरणः । हेलया तथापि भुवनं जयति मदनः ।

१ दाभिणपवयणओ S. २ खण्डकमुप॰ C; पण्डकमुप॰ A. ३ पवरण N. ४ कते S. ५ चतुर्मात्रद्वयं K. ६ षण्डिता A. ७ उज्जागर ABK; उज्जगर DF. ८ आवयं चलणं N. ९ अविलम्बिकः C, The Sūtra is dropped in D. १० पण्डिता A. ११ विलासमंगहिरा S. १२ समयतणू N.

सान्ते दोनावली ॥ ५८ ॥

सा हेला पादान्ते द्विमात्रोना आवली । यथा–

"नवघणमालिअत्ति कलिउं विहलओ,
सजलबिलोअणेहिं पहिआण सत्थओ ।
गिम्हे दवहुआसमसिमेलिणसामलिं,
पेच्छेइ हंत विंझसिहराण आवलिं ॥ ५८.१ ॥

चूपगा विनता ॥ ५९ ॥

चतुर्मात्रषट्कं पञ्चमात्रो गुरुश्च । समे जो लीर्वा विनता । यथा–

"मुहसिरिकलावनिज्जिअदिवायरनिसायरं तइलोक्कवइं,
अक्खलिअसुद्धझाणाणलेण निद्दड्ढसयलकम्मुग्गइं ।
विणयामरिंदमणिमउडकंतिपब्भारपल्लविअचरणयं,
तं अणुसरामि भवजलहितारणं वद्धमाणमिह सरणयं ॥ ५९.१ ॥

तौ चस्तौ विलासिनी ॥ ६० ॥

द्वौ त्रिमात्रौ एकश्चतुर्मात्रः पुनर्द्वौ त्रिमात्रौ विलासिनी । यथा–

"मत्तकोइलामहुरभासिणी,
हसइ किं पि सा जइ विलासिणी ।
दोण्णि हुंति सोहग्गलण्हिआ,
महिआ तह य चंदजोण्हिआ ॥ ६०.१ ॥

तौ चितौ मञ्जरी ॥ ६१ ॥

द्वौ त्रिमात्रौ त्रयश्चतुर्मात्राः पुनरेकस्त्रिमात्रो मञ्जरी । यथा–

"चूअमंजरिं मंजुकोइलागीअयं,
मलयमारुअं पुण्णबिंबयं चंदयं ।

1) नवघणमालिकमिति इत्यत्र पथिकानां सार्थः विन्ध्याचलशिखराणामावलिं पश्यति । कीदृशीम् । दवहुताशनमषीभिः मलिनाः कृष्णाः शाल्मलयो यत्र ताम् । क । ग्रीष्मे काले । सार्थः कीदृग् । विह्वलः व्याकुलः । कय(कलिउ)मिति ज्ञात्वा । इतीति किम् । नवघनमालिकां ज्ञात्वा । कैः सजलनयनैः । 2) मुहसिरिकलेति अत्र मुखश्रीकलापनिर्जितदिवाकरनिशाकरं त्रिलोकपतिं अस्खलितशुद्धध्यानानलेन निर्दग्धा सकलकर्माणि उद्गतिरूद्धवो येन स तम् । विनतामरेन्द्रमणिमुकुटकान्तिप्राग्भारेण पल्लवितं रक्तीकृतं चरणमेव स्वार्थे कं चरणकं यस्य स तथा । तं जिनमहं अनुसरामि भवजलधितारणं वर्धमानमिव शरणमेव शरणकम् । 3) मत्तकोइलामहुरभासिणीत्यत्र यदि सा मत्तकोकिलामधुरभाषिण्यां विलासिनी हसति तदा सौभाग्येन लक्ष्ये कोमले द्वे भवतः एका महिका द्वितीया चन्द्रज्योत्स्ना । 4) चूअमंजरिं इत्यत्र मधुमासे विषमाशुः कामः एतानि उपकरणानि प्राप्य शीघ्रं त्रैलोक्यविजयनसमर्थो भवति । तानि कानि । चूतमञ्जरीं मनोज्ञकोकिलागीतकं मलयाचलमारुतं पूर्णबिम्बं चन्द्रं च ।

१ मालइत्ति F. २ मलिनिल्लन P. ३ पिच्छइ K. ४ दइल्लिरे D18. ५ झाणनलेण F. ६ निद्दियसयलकुगई A. ७ होन्ह A; होंति EKP. ८ सयिण्हआ S. ९ तुम्हिओ. १० मल्लयध्वय B.

पाविऊण महुमासि एत्थ विसमत्थओ,

हवइ झत्ति तेलोक्कनिज्जयसमत्थओ ॥ ६१.१ ॥

**सा तान्ता सालभञ्जिका ॥ ६२ ॥**

सा मञ्जरी त्रिमात्रान्ता सालभञ्जिका। यथा–

"चरणकमललग्गे वि हु पिअयंमंमि पकोविरी,

सालभंजिअव्व सहि कीस तुमं सि अजंपिरी।

सुणसु समुल्लसंति पिअमाहवीकुलकलयला,

मयणविजयदुंदुहिझुणी इव पूरिअनहयला ॥ ६२.१ ॥

**चादिः कुसुमिता ॥ ६३ ॥**

सैव मञ्जरी पादादौ चतुर्मात्रश्चेत्कुसुमिता। यथा–

"मयपरिपुट्ठपुट्ठकलयंठीवंचमनिब्भरा,

विहडंफडभमंतभसलावलिकलयलसुंदरा।

घणघोलंतमलयपवणोद्धुअकुसुमिअकेसरा,

हिअयं निम्महंति न हु कस्स इमे महुवासरा ॥ ६३.१ ॥

**पञ्चगौ द्वितीयपष्ठौ जो लीर्वा द्विपदी ॥ ६४ ॥**

एकः षण्मात्रः पञ्च चतुर्मात्राः गुरुश्च। तथा द्वितीयषष्ठौ चगणौ जो लीर्वा द्विपदी। यथा–

"मा रे वच्च पहिअ निअदइअं परिहरिऊण सव्वहा,

इह हि समुल्लसंतकुसुमायरमाससुहंमि अज्जहा।

परहुअजुवइगीअहालाहलविहलंघलिअचित्तओ,

घेलसि न दुवइअं पि वम्मीसरसरनिउरंबछित्तओ ॥ ६४.१ ॥

---

1) चरणकमलेत्यत्र सखीं प्रति सखी प्राह। चरणकमललग्नेऽपि प्रियजने भर्तरि कथं प्रकोपनशीला हे सखि कथं अजल्पनशीला। केव। पुत्रिकेव। हे सखि शृणु प्रियो माधवो वसन्तो यस्याः सार्थात् कोकिला तस्याः कुलानां कलकलाः शब्दाः समुल्लसन्ति पीरतनभसलाः। इवोत्प्रेक्षते। कामविजयानकध्वनयः। 2) मयपरिपुट्ठेत्यत्र मदपरिपुष्टेन सघोषा याः कलकण्ठ्यः तासां पञ्चमस्वरावलिर्निर्भरा व्याप्ताः। विहडप्फडो व्याकुले देश्यः। एवंविधा भसला भ्रमरास्तेषामावल्यस्तासां कलकलेन गुञ्जारवेण सुन्दराः। घनाश्च ते घोलन्तश्च एवंविधा मलयपवनास्तैरुद्धृताः कुसुमितकेसरा येषु। एवंविधा वसन्तवासराः कस्य चित्तं न निम(र्म)थ्नन्ति अपि तु सर्वस्येति भावः। 3) मा रे वच्च पहिय इत्यत्र रे पथिक मा व्रज मा याहि सम्यगुल्लसत्कुसुमाकरमाससुखे वसन्तवासरे इत्यर्थः। निजदयितां परिहृत्य। कथम्। सर्वथा। तां मुक्त्वा चेद् गमिष्यसि तदा परभृतयुवतिगीतहालाहलविह्वलः सन् कन्दर्पशरसमूहताडितः सन् द्विपदिकामपि पदद्वयमितमेदिनीं न चलिष्यसि। ततो मा गच्छेत्यर्थः।

---

१ तेल्लक्कनि॰ A; तोक्कनि॰ D; तेल्लोक्कविजय S. २ ल्लुत्थओ B. ३ त्रिअयंमि CN; पियआमि A ४ सालिभंजि॰ D. ५ तुम्ह कीस स॰ A. ६ कुलकल॰ DS. ७ दुंदुभिरज्झिणी इव पूअनह॰ S. ८ चतुर्मात्रोऽपि केचिद् कु॰ F. ९ विहडप्फुड N; विहडप्फड E. १० पवणुद्धुअ E; पवणेद्धुअ N. ११ मारे N. १२ परहुअजुवई A; परहुअजुवई F. १३ वल्लसि N. १४ निउरंब B.

२॰ छन्दो॰

इहान्या अपि सुमनः-तारा-ज्योत्स्ना-मनोवतीप्रभृतयः सप्तत्रिंशद् गणसमा द्विपद्यो विपुला-चपलादयोऽष्टावर्द्धसमाश्च कैश्चिन्निबद्धाः । ताश्च क्वचित्काश्चिदन्तर्भवन्तीति पृथङ् नोक्ताः ॥ ६४.१ ॥

**साद्ये न्ले छै रचिता ॥ ६५ ॥**

सा द्विपदी आद्ये चगणे न्ले लघुचतुष्टये सति छैः सप्तभिर्मात्राभिर्यतिश्चेद्रचिता । रतिकेत्यन्ये । यथा—

"नचिरकीरमिहुणकोलाहलमुहलिअकलमछेत्तओ,
दिम्मुहमहमहंतगंधुक्कडविअसिअसत्तवण्णओ ।
विरइअमुद्धदुद्धसुंदेरिमैअविरलकासहासओ,
पिअसहि मा पिअंमि परिकुप्पसु जं सरओ समागओ ॥ ६५.१ ॥

**गन्तारनालम् ॥ ६६ ॥**

सा द्विपदी गुर्वन्ता एकेन गुरुणा वृद्धा आरनालम् । यथा—

"अविरलबाहवारिधारावलिविअलणसोणलोअणाए,
दारुणपंचबाणबाणाहयहिअयफुरंतवेअणाए ।
तुह विरहंमि चंदमंदानिलचंदणतावजालिआए,
अहिणवमार नालवणयं पि तीइ तं कुणसि बालिआए ॥ ६६.१ ॥

**उपान्त्यलोना कामलेखा ॥ ६७ ॥**

सैव द्विपदी अन्त्यस्य गुरोः समीपमुपान्त्यं तत्र यो लः तेनोना कामलेखा । यथा—

"राईं चंदकिरणधवला मणहरणा पुप्फमाला,
नीलुप्पलपसूणपरिवासमहग्घा जुण्णहाला ।
गेहं रयणदीवरुइरुइरं गीअं पंचमेणं,
तेण विणा असारमखिलं खु कामलेहाधरेणं ॥ ६७.१ ॥

1) नचिरकीरमिथुने(हुणे)त्यत्र नवीनशीलशुकमिथुनकोलाहलमुखरितशालिक्षेत्राणि यस्यां सा । दिङ्मुखेषु उल्लसन्तो गन्धोत्कटा विकसिताः सप्तपर्णाः यस्यां सा । विरचिता मुग्धैः ग्रामलोकैः दुग्धानां सुन्द(रं)रिमेति सौंदर्यं यत्र । काशेषु दुग्धगुणारोपः इत्यर्थः । सा चासौ अविरलकाशा एव हासः तौ उभौ यत्र सा । यस्मात्कारणात् एवंविधा शरत् समागता अत एव प्रियसखि प्रिये मा परिकोपं कुरु । 2) अविरलबाहेत्यत्र हे अभिनवमार कामसदृशरूप तस्या आलपनं अपि त्वं न करोषि । तस्याः कथंभूतायाः । अविरलबाष्पवारिधारावली[विगलनशोण] लोचनायाः । पुनः क० दारुणपञ्चबाणाहतहृदये स्फुरद्वेदनायास्तव विरहे सति चन्द्रमन्दानिलचन्दनानां तापैर्ज्वालितायाः । 3) राईं चंदकिरणेत्यत्र चन्द्रकिरणधवला रात्रिर्मनोहरा पुष्पमाला नीलोत्पलप्रसूनवासमहार्घ्या जीर्णहाला मदिरा रत्नदीप[रुचि]रुचिरं गृहं पञ्चमस्वरेण गीतम् । सुखमित्यध्याहार्यम् । परं तेन भर्त्रा विना सर्वं अपि असारम् । कीदृशेन कामलेखाधरेण ।

१ इहान्यापि N. २ मुहलिअकलल० A; मुहलिअकलस० D ३ गंधक्कड B; गंधक्कड C. ४ विरइअ ABDNP. ५ सुंदरिम NS. ६ बाषाहइहि० P. ७ विरहंमि P. ८ रुइ dropped in AK; रुइरं रुइ N.

**पचीदाश्चन्द्रलेखा ॥ ६८ ॥**

एकः षण्मात्रः चत्वारश्चतुर्मात्राः द्विमात्रश्चैकः चन्द्रलेखा । यथा—

[1]मयणवियारसमुद्दलहरिविच्छारकारिणी,
जणिआणंदचंदमणिनिज्झरसारसारणी ।
उच्छलंतलायण्णमऊहावलिपसाहिआ,
मज्झ नयणकुमुआण इमा सा चंदलेहिआ ॥ ६८.१ ॥

**चिपंताः क्रीडनकं जैः ॥ ६९ ॥**

चतुर्मात्रत्रयमेकः पञ्चमात्रः त्रिमात्रश्च । जैरित्यष्टभिर्यतिश्चेत्क्रीडनकम् । यथा—

[2]कंकणकिंकिणिनेउरकलयलमुहलं,
पवणपहल्लिरसिचयंचिअगयणयलं ।
दीहोच्छलणखेल्लणकयलोलणयं,
सहइ इमाए अंदोलणकीलणयं ॥ ६९.१ ॥

**पपचतदा अरविन्दकम् ॥ ७० ॥**

षट्पञ्चचतुस्त्रिद्विमात्राः अरविन्दकम् । यथा—

[3]उअह तुज्झ विरहे इमाइ मुहकमलं,
अविरलबाहधाराविलुलिअकज्जलं ।
अब्भलेहपिहिअं व पुण्णिमचंदयं,
सेवलसंवलिअं व नवारविंदयं ॥ ७०.१ ॥

**पलदलचदगाङ्गौ मागधनर्कुटी ॥ ७१ ॥**

षण्मात्रलघुद्विमात्रलघुचतुर्मात्रद्विमात्रगुरुभ्यः परौ गुरू चेन्मागधनर्कुटी । यथा—

[4]नवमयरंदपाणपायडमयउत्ताला,
भमरा रुणरुणंति कायलिकयसद्दाला ।

1) मयणवियारेत्यत्र मदनविकारसमुद्रलहरीविस्तारकारिणी जनिता निष्पादिता आनन्द एव चन्द्रमणिश्चन्द्रकान्तस्तस्य निर्झरो निष्यन्दः स एव सारसारिणी यया सा । उच्छलल्लावण्यमयूखश्रेणिभिः प्रसाधिता शोभिता । मम नयनकुमुदानां एषा चन्द्रलेखेव चन्द्रलेखिका आह्लादकत्वात् । 2) कंकणकिंकिणित्यत्र एतस्या आन्दोलनक्रीडनं शोभते । कङ्कणकिङ्किणीनूपुराणां कलकलः शब्दविशेषस्तेन मुखरम् । पुनः कथंभूतम् । पवनेन प्रकम्पमानं यत्सिचयं परिधानवस्त्रं तेनाश्चितं पूजितं गगनतलं यत्र तत् । दीर्घोच्छलनखेल्लनक्रीडालोलनकम् । 3) उअ तुज्झेत्यत्र पश्य तव विरहे एतस्या मुखकमलम् । कीदृशम् । अविरलं निरन्तरं बाष्पधाराभिर्विलुलितं कज्जलं यत्र । अभ्रलेखापिहितमिव पौर्णिमचन्द्रं अथवा सेवालपटलैः सवलितं आच्छादितं नवीनारविन्दमिव । 4) नवमयरंदेत्यत्र नूतनमकरन्दपानेन प्रकटो मदस्तेन उत्ताला मदोत्कटा ये भ्रमरास्ते रणत्(ण)शब्दं कुर्वन्ति । कीदृशाः । काकलीकृतशब्दालाः । विरूपा दृष्टिर्येषां ते विदृष्टयः न विदृष्टयो अविदृष्टयः शोभनदृष्टय इत्यर्थः । चूताङ्कुरैः कषायः कण्ठो यासां वा एवंविधाः कलकण्ठ्यः कोकिलाः पञ्चमस्वरं उद्गिरन्ति शब्दं कुर्वन्तीत्यर्थः ।

१ समद् S. २ निब्भर DN; निम्भर CP. ३ नयनकु- N. ४ चिपचाः N. ५ तुज्झ N. ६ पिहिअव्वं D. ७ The whole line upto यथा is dropped in P. ८ कोइलि A.

पंचममुग्गिरंति एआ अविदिट्ठीओ,
चूअंकुरुकसायकंठा कलयंठीओ ॥ ७१.१ ॥

**सश्चेन्नर्कुटकम् ॥ ७२ ॥**

पलदलचदगात्सगणश्चेत्तदा नर्कुटकम् । यथा–

"परिमललुद्धलोलअलिगीअसणक्कुडयं,
जाव न जग्गवेइ विसमेत्थमहाभडयं ।
माणं मोत्तुआण माणंसिणि सप्पणयं,
पेम्मभरेण ताव अणुसर सहि वल्लहयं ॥ ७२.१ ॥

**पजौ सिः समात् ॥ ७३ ॥**

एकः षण्मात्रो जगणः सगणत्रयं च समान्नर्कुटकं समनर्कुटकमित्यर्थः । यथा–

"सयलसुरासुरिंदपरिवंदिअपायतलो,
निरुवमझाणनाणवसनासिअकम्ममलो ।
निवसउ मे मणंमि भयवं सिरिवीरजिणो,
विलयं जंति कामपमुहा जह ते अरिणो ॥ ७३.१ ॥

नलगजसाः ससौ यदि तदा समनर्कुटकमिति तु "संस्कृतनर्कुटेनैव गतार्थमिति नोक्तम् ॥ ७३.१ ॥

**त्रिष्वप्यन्त्यचस्य ते तरङ्गकम् ॥ ७४ ॥**

त्रिष्वपि मागधनर्कुटी-नर्कुटक-समनर्कुटकेष्वन्त्यस्य चतुर्मात्रस्य स्थाने त्रिमात्रश्चेद् भवति तदा तरङ्गकम् । यथा–

"बहुविहभावमुद्धमहुरत्तणमंदिरं,
पयणुदूअसामसरसीरुहसुंदरं ।
निम्मलकंतिपुंजपरिलद्धयचंगयं,
सोहइ तीइ दीहनयणाण तरंगिअं ॥ ७४.१ ॥

1) परिमलेत्यत्र परिमललुब्धलोलभ्रमरगीतेन स्वनत् कुड्यं कर्तृत्वेन स्यन्दं कन्दर्पमहाभटं न जागरयति तावत् हे मनस्विनि मानं मुक्त्वा सप्रणयं प्रेमभरेण सखि वल्लभं अनुसर भजेत्यर्थः । 2) सयलसुरेत्यत्र सयेति श्रीभगवान् वीरजिनो निवसतु । कीदृक् । सकलसुरासुरेन्द्रपरिवन्दितपादतलः । निरुपमध्यानज्ञानवशेन नाशितः कर्ममलो येन सः । तथैव किम् । यथा ते प्रसिद्धा अरयः कामक्रोधादयः विलयं यान्ति । 3) संस्कृतनर्कुटेनेत्यत्र नर्कुटमिति नाम जयदेवमते । स्वमते तु सप्तदशाक्षराणां जातौ 'न्जभजा ल्गावश्वयुक्ष्यम्' (२.२९७)। 4) बहुविहभावेत्यत्र बहुविधभावेन मुग्धं मनोहरं सुन्दरत्वं यस्य मन्दिरं गृहम् । पवनोद्धतसरसीरुहसुन्दरं निर्मलकान्तिपुञ्जेन परिलब्धं चङ्गितं येन । तत् शोभते तस्या दीर्घनयनतरङ्गितम् ।

१ अविहीट्ठीओ N. २ चूअंकुर A; चूअकुर ES. ३ कलकंठीओ EK. ४ सगणो वर्णगणश्चेद् P. ५ विसमच्छ B. ६ मणपसं A. ७ मिम्म० E. ८ सिहि B. ९ डाणमाण P. १० पाविअ B. ११ भयवं N. १२९ नर्कुटेष्वन्त्यस्य P. १३ त्रिमात्रे सति P. १४ बहुविहु N; विह dropped in A. १५ पवणहूअ D. पवणुदुअ ADN. १६ तरंगयं A.

**गान्तं पवनोद्धुतम् ॥ ७५ ॥**

तरङ्गकमेव गान्तं अन्ते गुरुणाधिकं पवनोद्धुतम् । यथा—

[1]"भसला दसयति महुपाणपरव्वसाण,
उक्कठावरलिअमणाण निअवल्लहाण ।
निब्भरमहुरगीईरवसुचरिउ इमासु,
दोलाकीलणाइ पवणुद्धुअवल्लिआसु ॥ ७५.१ ॥

**चाभ्यां पाभ्यां पाद्वा तिर्निध्यायिका ॥ ७६ ॥**

द्वाभ्यां चतुर्मात्राभ्यां यद्वा पञ्चमात्राभ्यां एकस्माद्वा पञ्चमात्रात्पर त्रिमात्रत्रयं चेत् त्रिधाप्येषा निध्यायिका ॥ चाभ्यां तिर्यथा—

[2]"हो सामोअरि कुरङ्गनेत्तिए,
वयणमऊहजिअचन्दकन्तिए ।
निज्झाइजजीयाविअमणसिए,
दुसहो तुज्झ विरहानलो पिए ॥ ७६.१ ॥

पाभ्यां तिर्यथा—

[3]"निज्झाइअइ जत्थ मयणयवल्ली,
ललिअकतिचगे कलकसोअरी ।
सेवति त सुह सुहयदय सरा,
उम्मिनमालइरिणच्छि चउ(ओ)रा ॥ ७६.२ ॥

पाचिर्यथा—

[4]"इरइ जम्मसयसंचिआइ,
भविआण असेसदुरिआइ ।
सुइ सुइ जणिअमयणमाह,
निज्झाइज पि भुवणनाह ॥ ७६.३ ॥

1) भसला इत्यस्यायम् भ्रमरा पवनोद्धुतवल्लिकासु मनासु दोलाक्रीडनानि दर्शयन्ति । किं कृत्वा । निर्भरमधुरगीतिरवसुचरितं । कामान् । निजवल्लभानाम् । कीदृशीनाम् । मधुपानपरवशानां उत्कण्ठतरलित-मनसाम् । 2) हो सामोअरीत्यस्य हे श्यामोदरि यत्र विरहानलो दुःसहो यावन् । सा कथंभूता । कुरङ्ग-नेत्रायाः वदनमयूखजितचन्द्रकान्त्याः निध्यानेन [illegible] जीवितं [illegible] कामो यथा तथा । 3) निज्झाइ [illegible] यत्र [illegible] निध्यायन [illegible] । कीदृशि सुरा । [illegible] सुन्दरि । [illegible] सचन(क)। क। चकोरा चतुरा [illegible] (पद ४) [illegible] । 4) इरइ जम्मसयसंचियाइं इत्यस्य हे [illegible] हे भुवननाथ हे जिनदेव । [illegible] [illegible] जन्मशतसंचितानि [illegible] हरति [illegible] इति भावः ।

केचित्तु पचाभ्यां तिरिति निध्यायिकां वदन्ति । यथा–

[1]"वम्मीसरकंचणतोमरललिआ,
दिट्ठा छुडु सुंदरि चंपयकलिआ ।
घुलिओ छुडु दक्खिणओ गंधवहो,
विअलिओ[1] ता पहिआण मणोरहो ॥ ७६.४ ॥

**चुपौ युग्म जोऽधिकाक्षरा ॥ ७७ ॥**

पञ्च चतुर्मात्रा एकः पञ्चमात्रस्तथा समो न जगणोऽधिकाक्षरा । यथा–

[2]"उज्जागरओ कवोलपडुत्तणं तणुअत्तं,
दीहुण्हा सासदडया चित्तए विवसत्तं[2] ।
अहिअक्खरजंपिएण किं वा मुद्दय तुह विरहे,
सा एत्ताहे वराईआ[3] निअयं मरणं लहे ॥ ७७.१ ॥

**सा तुर्यपा मुग्धिका ॥ ७८ ॥**

सा अधिकाक्षरा तुर्योऽपि चेत्पगणो भवति तदा मुग्धिका । यथा–

[3]"जीए लग्गेइ चंदणं गरलरसं व दूसहं,
अगंपि अ[4] जीए तावइ ससी अणंगनीसहं ।
कयलीदलमारुओ वि किरइ हुअवहं पिव जीए,
दाहो मुद्धाइ एस कह समइ गुणालय तीए ॥ ७८.१ ॥

**आदौ पश्चित्रलेखा ॥ ७९ ॥**

सा अधिकाक्षरा आदौ पश्चेच्चित्रलेखा । यथा–

[4]"नहयलम्मि सयलदिसामुहेसु गहणम्मि गिरिवरे,
सरिपुक्खरिणिआसु[6] देवउलएसु भित्तिसु नयरे[7] ।
दूरम्मि पासे घरम्मि अंगणपएसए तुह
चित्तलिहिअं पिव मयच्छि पेच्छामि सुंदरं मुहं ॥ ७९.१ ॥

1) वम्मीसरकंचणेत्यत्र हे सुन्दरि यावत् कन्दर्पस्य काञ्चनतोमरवल्लिका मनोहरा चम्पककलिका दृष्टा यावच्च दक्षिणतः गन्धवहो वायुः घूर्णनः । छुडु इति यदर्थे निश्चये च । विअलि । तावत्पथिकानां मनोरथो गलितः । 2) उज्जागरओ इत्यत्र कश्चित्काचिदाह । तव विरहे सति तस्याः विनिद्रत्वं कपोले पाण्डुत्वं दीर्घोष्णाः श्वासदण्डाः चित्ते विह्वलत्व इत्यादयो दोषा भवन्ति । अहिअक्खरजंपिएणत्ति – अधिकमन्यथाकथनेन किं वा । इदानीं सा वराकिका निश्चित मरणं प्राप्स्यति चेत् त्वं नागमिष्यसीति भाव । 3) जीए लग्गेइ चदणमित्यत्र यस्या अङ्गे गरलरसमिव चन्दनं दुस्सहं लगति । यस्या अङ्गमपि तापयति । कः । शशी चन्द्रः । कीदृशः । अनङ्गस्य नितरां सखा । कदलीदलमारुतोऽपि विरहचि हुताशनवद्दाहं करोति यस्या मुग्धायाः हे गुणालय । त्वया विना कथं एतदुपशाम्यति । 4) नहयलम्मि सयलेत्यत्र नभसि सकलदिङ्मुखेषु गहने गिरिवरे नदी महती सरित् तुच्छजला पुष्करिणी वापी तासु । देवकुले भित्तिषु नगरे दूरदेशे पार्श्वे गृहे प्राङ्गणप्रदेशे एषु स्थानेषु हे मृगाक्षि चित्रलिखितमिव सुन्दरं तवाननं पश्यामि ।

१ विललिओ N, विअलिअ A. २ विवसत्त N. ३ वराईया A. ४ य A; dropped in P. ५ य N. ६ सिरिपु० B. ७ भमरे S.

जे वि हु सीसणु धरहिं, पायकमलु जे पणमहिं ।
ताह नं लच्छी विमुह, पहु जसधवलिअदिसिमुह ॥ ३४.१ ॥

**षडंह्वावाद्ये तुर्ये पादौ द्वितीये पञ्चमे**
**चौ शेषे पाभ्यां चः पो वा कीर्तिधवलम् ॥ ३५ ॥**

तत्र षडंह्रौ धवले प्रथमे चतुर्थे च पादे द्वौ षण्मात्रावेको द्विमात्रः । द्वितीये पञ्चमे च पादे द्वौ चतुर्मात्रौ । शेषे तृतीये षष्ठे च षगणद्वयात्परश्चतुर्मात्रः पञ्चमात्रो वा चेत् तदा कीर्तिधवलम् । यथा–

"उक्करडा रयरलेंउ गज्जउ, चिरु जुज्झुमेणु,
उन्नामउ सिरु वसरु म लेंज्जउ ।
धक्क महब्भर तुंहु कड्ढहिं, अनु न तिहुअणि,
किचि धवल विसीउ तुह वट्टेइ ॥ ३५ १ ॥

**चतुरंह्वावोजे षचौ समे पचचाद्स्तो वा गुणधवलम् ॥ ३६ ॥**

तत्र चतुरंह्रौ धवले विषमपादयोरेकः षण्मात्रो द्वौ चतुर्मात्रौ । समयोः पचचेभ्यः परो द्विमात्रस्त्रिमात्रो वा चेत् तदा गुणधवलम् । यथा–

"कद्दमभग्गा मग्गुलया, वहुं पिहुला दुत्तरजलुल्लया ।
तिम्व भरु वहेंमु गुणधवलया, जिम्व केम्वइ न हसति पिसुणया ॥ ३६.१ ॥

**पचताः पचौ भ्रमरः ॥ ३७ ॥**

ओजपादयोः षण्मात्रचतुर्मात्रत्रिमात्राः समयोः षण्मात्रचतुर्मात्रौ चेत्तदा भ्रमरो धवलम् । यथा–

"किसि वहारी वण्णेविणु, कइ अनु न वण्णेहिं ।
मालइ माणिवि कि भमर, धत्तूरइ लग्गेहिं ॥ ३७ १ ॥

1) उक्करडा रयरलेउ इत्यत्र मयि धुराधरे भार समुद्वहति सति माद्दश्तित्व सूपयस्येप मदग्रे वग्म इत्युत्पन्नसद् वृषभ प्रति कश्चिदाह । हे धवल त्वत्सदृशस्त्रिभुवन कोऽपि नास्ति । यस्मा मार्गस्थितभारं त्वमेव कृष्यसि नान्य इत्युत्तरत्र विषाद किं वदन । स च वत्सोऽवकर उत्सरत्तु गर्जातु करातु । चिरं योद्धु ममा स च शिर उन्नामयतु । मा लज्जतां वीडां मा करोतिति शब्दार्थ । 2) कर्दमभग्ना मार्ग(र्गु)लतयत्र हे सुरागी वृषभ धवलशब्देन वृषभ । कर्दमैर्भग्ना मार्गा दुत्तरजलवन्त । पृथुला बहा नद्य सन्ति । तत्र तथा भार वह यथा तत्र ते पिशुना न हसन्ति हास्य न कुर्वन्ति कथमपि । अन्यथा कारयन्ति । 3) किंचि वहारी इत्यत्र त्वदीयां कीर्तिं वर्णयित्वा कवि- र्कि वर्णयान । अपि तु न । कथनम् । यथा मालतीं मार्गयि भङ्गीकृत्य भ्रमर कनकद्रुमे किं लगति । अपि तु न तथायम् ।

१ सासण AO २ ता हत उच्छी ३ दिसउह A दिसिमुहु B ४ खन्चउ, खवलट S खलवउ O ५ उज्जामणु AO ६ मज्यज्जउ B ७ तुहु B ८ कड्डइ B कड्ढहिं D ९ अनुम N १० तिहुअणि A. ११ विसाओ १२ वहइ A. Portion from ३०-१ to ३५ १ end is not photographed in E १३ वह P १४ वहुनु B १५ सम्वंविनु D १६ अनुम N १७ वर्णहिं N, वण्णिहिं AP १८ धत्तुरइ S, १९ लगइ P

**पचताः पचचा अमरम् ॥ ३८ ॥**

ओजे षण्मात्रचतुर्मात्रत्रिमात्राः समे षण्मात्र एकश्चतुर्मात्रौ द्वौ चेत्तदा अमरं धवलम्। यथा—

"इंदहु तुहुं गुणि अहिअउ, सग्गु वि[१] पहु मइं वाहिअउँ।
अमरविलासिणिगीअए, तुह पर किचि निसामिअँए ॥ ३८.१ ॥

**आद्ययोः पची अन्त्ययोश्चः सर्वत्रान्ते तो दो वा मङ्गलम् ॥ ३९ ॥**

आद्ययोः प्रथमद्वितीययोः पादयोः प्रत्येकं षगणश्चगणत्रयं च, अन्त्ययोस्तृतीयचतुर्थयोः प्रत्येकं चगणपञ्चकं सर्वपादेषु चान्ते त्रिमात्रो द्विमात्रो वा चेत्तदा मङ्गलार्थसंबद्धत्वात् मङ्गलम्। यथा—

"तुह असिलट्ठिहिं नरवइ मंगलकारणि,
वित्थारिअ निम्मलयर सत्थिअधोरणि।
संगररंगि विवाहमहूसवि जयलच्छिहिं,
दारिअमयगलकुंभत्थलमोत्तिअँगुच्छिहिं ॥ ३९.१ ॥

**उत्साहादिना येनैव धवलमङ्गलभाषागाने
तन्नामाद्ये धवलमङ्गले ॥ ४० ॥**

उत्साहादीत्यादिग्रहणात् प्रक्रान्तानां रासावलयादीनां, पूर्वोक्तानां हेलादीनां, वक्ष्यमाणानां दोहकादीनां च ग्रहणम्। "तन्नामाद्ये इति उत्साहादिनामपूर्वके। यथा—उत्साहधवलं वदनधवलं हेलाधवलं दोहकधवलं चेति। एवं मङ्गलेऽपि उत्साहमङ्गलादि वाच्यम्। यदाहुः—

उत्साहहेलावदनादिलाद्यैर्, यद् गीयते मङ्गलवाचि किञ्चित्।
"तद्रूपकाणामभिधानपूर्वं, छन्दोविदो मङ्गलमामनन्ति ॥ ४०.१ ॥

तैरेव धवलव्याजात् पुरुषः स्तूयते यदा ॥
तद्वदेव तन्नामको धवलोऽप्यभिधीयते ॥ ४०.२ ॥

---

1) इंदहु तुहुं इत्यत्र इन्द्रात्वं गुणैरधिकः स्वर्गस्यापि प्रभुस्त्वं मया दृष्टः यस्मादमरविलासिनीगीतके तव परा महती कीर्तिः भूयते। एतावता राज्ञोऽतिशयो द्योतितोऽमरविलासिनीभिस्त्वं गीयसे। 2) तुह असिलट्ठिहिं इत्यत्र हे नरपते तव खड्गयष्ट्या मङ्गलनिमित्तं निर्मलस्वस्तिकधोरण्यो विस्तारिता संगरमण्डपे। कैः। दारितमदकलकुम्भस्थलमौक्तिकगुच्छैः। समूहैरित्यर्थः। कस्मिन्सति। विजयलक्ष्म्याः विवाहमहोत्सवे सति। 3) तन्नामाद्ये इत्यत्र धवलमङ्गलेति नामद्वयम्। 4) तद्रूपकाणामित्यत्र उत्साहादिरूपकाणामभिधानपूर्वकं पूर्व। तैरेवेति अत्र उत्साहादिभिरेव। तद्वदेवेत्यत्र तद्रूपकाणामभिधानपूर्वकं पूर्व।

---

१ अमरधवलं A. २ इंदह P. ३ सग्गु K (!) ४ वाहिअउ BCD. ५ निसामिइए P. ६ मंगलकारिणि ADB. ७ मोत्तिअगोच्छिहिं P. ८ आद्यागीते A. ९ दोहकीनाम् A. १० तद्रूपकाणामभि॰ A. ११ मङ्गलम्ना॰ B.
२४ छन्दो॰

देवगानं फुल्लडकम् ॥ ४१ ॥

उत्साहादिना येनैव देवो गीयते तत्फुल्लडकम् ॥ ४१ ॥

गाने चिदौ झम्बटकम् ॥ ४२ ॥

यस्य कस्यचिद्गाने चगणत्रयं द्विमात्रश्च पादे चेत्तदा झम्बटकम् । यथा–

"पहु तुह वेरि[1] अरण्णि गय, निच्चु वि निवसहिं जिम्व ससय ।
घणकंटयदूसंचरेणि[3], तहिं झंबडइ करीरवणि ॥ ४२.१ ॥

वक्ष्यमाणा गन्धोदकधारैवेयं गानवशाज्झम्बटकसंज्ञां लभते ॥ ४२.१ ॥

उत्साहादिप्रकरणम् ।

*

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ उत्साहादिप्रतिपादनः पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

ग्रन्थाग्रं १८८; उभयं २२८४ ।

---

1) पहु तुह इत्यत्र हे प्रभो तव वैरी अरण्यगतः सन् नित्य यथा शशको निवसति तथापन्न् । क। करीरवने । कीरदो । मनुष्यसंहते निश्चमिच्छिते घनकण्टकदुःसञ्चरे ।

इत्याचार्येति पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

१ झम्बडक B. २ वेरिय रवि A; वेरि अरवि P. ३ दुसंचरवि B.

# अथ षष्ठोऽध्यायः ।

सन्ध्यादौ कडवकान्ते च ध्रुवं स्यादिति ध्रुवा ध्रुवकं घत्ता वा ॥ १ ॥

कडवकसमूहात्मकः सन्धिस्तस्यादौ । चतुर्भिः पद्धडिकाद्यैश्छन्दोभिः कडवकम् । तस्यान्ते ध्रुवं निश्चितं स्यादिति ध्रुवा, ध्रुवकं, घत्ता चेति[1] संज्ञान्तरम् ॥ १ ॥

सा त्रेधा षट्पदी चतुष्पदी द्विपदी च ॥ २ ॥

सेति ध्रुवा ॥ २ ॥

कडवकान्ते प्रारब्धार्थोपसंहारे आद्ये छड्डणिका च[1] ॥ ३ ॥

प्रारब्धस्य प्रकरणायातस्यार्थस्य कडवकान्ते भङ्ग्यन्तरेणाभिधाने षट्पदीचतुष्पद्यावेव छड्डणिकासंज्ञे । न केवलं ध्रुवादिसंज्ञे छड्डणिकासंज्ञे चेति चार्थः ॥ ३ ॥

षट्पदीचतुष्पदीध्रुवयोश्च सप्तकलादयः सप्तदशकलान्ताः पादा भवन्तीति[2] तेषु गणनियममाह —

ध्रुवायां छैः कलाभिः पादे चतौ पदौ वा ॥ ४ ॥

ध्रुवायां छैरिति सप्तभिः कलाभिः पादे चतुर्मात्रत्रिमात्रौ पञ्चमात्रद्विमात्रौ वा गणौ भवतः ॥ ४ ॥

जैः पतौ पदौ चौ वा ॥ ५ ॥

जैरित्यष्टभिः कलाभिः पादे पञ्चमात्रत्रिमात्रौ षण्मात्रद्विमात्रौ द्वौ वा चतुर्मात्रौ गणौ भवतः ॥ ५ ॥

झैः षतौ तिः पचौ वा ॥ ६ ॥

झैरिति नवभिः कलाभिः पादे षण्मात्रत्रिमात्रौ त्रिमात्रत्रयं पञ्चमात्रचतुर्मात्रौ वा गणौ भवतः ॥ ६ ॥

ञैश्चादौ षचौ पौ वा ॥ ७ ॥

ञैरिति दशभिः कलाभिः पादे चतुर्मात्रद्वयद्विमात्रौ षण्मात्रचतुर्मात्रौ द्वौ वा पञ्चमात्रौ गणौ भवतः ॥ ७ ॥

---

अथ षष्ठाध्यायस्य पर्यायाः प्रारभ्यन्ते ।

1) आद्ये छड्डणिका चेत्यत्र प्रथमे षट्पदीचतुष्पद्यौ [छड्डणिका]संज्ञे ।

---

१ पद्धडिकाद्यै॰ P. २ चेति BCN. ३ भवन्ति तेषु P. ४ पञ्चमात्रौ वा गणौ॰ A.

टैश्चपदं पचदं पदतं चातौ वा ॥ ८ ॥

टैरित्येकादशभिः कलाभिः पादे चतुर्मात्रपञ्चमात्रद्विमात्राः पञ्चमात्रचतुर्मात्रद्विमात्राः षण्मात्रद्विमात्रत्रिमात्राश्चतुर्मात्रद्वयत्रिमात्रौ वा गणा भवन्ति ॥ ८ ॥

ठैश्चपतं पचदं पादौ चिर्वा ॥ ९ ॥

ठैरिति द्वादशभिः कलाभिः पादे चतुर्मात्रपञ्चमात्रत्रिमात्राः षण्मात्रचतुर्मात्रद्विमात्राः षगणद्वयद्विमात्रौ चतुर्मात्रत्रयं वा गणा भवन्ति ॥ ९ ॥

डैः पातौ चापौ पचतं वा ॥ १० ॥

डैरिति त्रयोदशभिः कलाभिः पादे पञ्चमात्रद्वयत्रिमात्रौ चतुर्मात्रद्वयपञ्चमात्रौ षण्मात्रचतुर्मात्रत्रिमात्रा वा गणा भवन्ति ॥ १० ॥

ढैश्चिदौ पचचं वा ॥ ११ ॥

ढैरिति चतुर्दशभिः कलाभिः पादे चतुर्मात्रत्रयद्विमात्रौ पचचा वा गणा भवन्ति ॥ ११ ॥

णैश्चितौ पिर्वा ॥ १२ ॥

णैरिति पञ्चदशभिः कलाभिः पादे चतुर्मात्रत्रयत्रिमात्रौ त्रयो वा पञ्चमात्रा गणा भवन्ति ॥ १२ ॥

तैः पचादं चीर्वा ॥ १३ ॥

तैरिति षोडशभिः कलाभिः पादे षण्मात्रचतुर्मात्रद्वयद्विमात्राश्चत्वारो वा चतुर्मात्रा गणा भवन्ति ॥ १३ ॥

थैः पचातं चिपौ वा ॥ १४ ॥

थैरिति सप्तदशभिः कलाभिः पादे षण्मात्रचतुर्मात्रद्वयत्रिमात्राश्चतुर्मात्रत्रयपञ्चमात्रौ वा गणा भवन्ति ॥ १४ ॥

एवं च सप्तादिसप्तदशान्तकलौघेभ्यस्त्रिभिरतुल्यैः[1] तुल्यातुल्यैः तुल्यैर्वार्धे पादा यत्र भवन्ति सा विदग्धगोष्ठीगरिष्ठा षट्पदी ध्रुवा। षट्पदीषु चाद्यस्य पादस्य द्वितीयेन तृतीयस्य षष्ठेन चतुर्थस्य पञ्चमेनानुप्रासः कर्तव्यः। चतुष्पदीष्वाद्यस्य द्वितीयेन तृतीयस्य चतुर्थेन। अन्तरसमासु सङ्कीर्णासु च प्रायेण द्वितीयस्य चतुर्थेनानुप्रासः कार्यः। तत्र षट्पदीभेदानाह—

तृतीयषष्ठयोर्दशादिसप्तदशान्ताः कलाः शेषेषु
सप्त षट्पदी षट्पदजातिरष्टधा ॥ १५ ॥

1) त्रिभिरतुल्यैरिति-तुल्यकलालक्षणं वा अर्धसमं एकः पादोऽपरं द्वयं चान्यत्। अथवा सर्वैरप्यन्यैः।

१ कार्य. A. २ कर्तव्य. A.

तृतीयषष्ठयोः पादयोः दशाद्यो मात्राः एकैकवृद्ध्या यावत् सप्तदश, अन्येषु चतुर्षु पादेषु सप्तैव यत्र भवन्ति, सा षट्पदजातिर्नाम षट्पदी भवति । सा च दशादीनां सप्तदशान्तानामष्टविधत्वादष्टधा । तत्राद्या यथा—

"इअ नारिहिँ, रससारिहिँ, मुहपरिमललुद्धउ ।
दुरु ढोल्लइ, न हु मेल्लइ, छप्पयगणु मुद्धउ ॥ १५.१ ॥

एवं शेषभेदेषूदाहार्यम् ॥ १५.१ ॥

अष्टोपजातिः ॥ १६ ॥

तृतीयषष्ठयोः पादयोर्दशादिसप्तदशान्ताः कलाः शेषेष्वष्टौ चेत्तदोपजातिर्नाम षट्पदी । पूर्ववदष्टधा । तत्राद्या यथा—

"इअ उवजाइहिँ, सुरहिअवाइहिँ, गुंजिरघणछप्पउ ।
उव घण सारउ, केअइफारउ, कसु नवि रइ अप्पउ ॥ १६.१ ॥

एवं शेषभेदेषूदाहार्यम् ॥ १६.१ ॥

नवावजातिः ॥ १७ ॥

तृतीयषष्ठयोः पादयोर्दशादिसप्तदशान्ताः कलाः शेषेषु नव चेत्तदा अवजातिर्नाम षट्पदी । पूर्ववदष्टधा । तत्राद्या यथा—

"इअ वणराइहिँ, अहिणवजाइहिँ, छप्पउ परिभमइ ।
मालइरत्तउ, महुरसमत्तउ, जलयागमसमइ ॥ १७.१ ॥

एवं शेषभेदेषूदाहार्यम् । एवं षट्पदजात्युपजात्यवजातीनां प्रत्येकमष्टविधत्वाच्चतुर्विंशतिधा षट्पदी ॥ १७.१ ॥

चतुष्पदी वस्तुकं सान्तरसमार्धसमा संकीर्णा सर्वसमा च ॥ १८ ॥

वस्तुकमिति चतुष्पदा एव नामान्तरम् । "तुल्यसमपादा तुल्यविषमपादा च अन्तरेण व्यवधानेन समान्तरसमा । तुल्यप्रथमद्वितीयपादा तुल्यतृतीयचतुर्थपादा चार्धे सममस्ता अर्धसमा । व्यामिश्रा सङ्कीर्णा । तुल्यचतुष्पादा सर्वसमा ॥ १८ ॥

---

1) इअ नारिहिँ इत्यत्र एव रससारायाः नार्याः मुखपरिमललुब्धः सन् मुग्धः षट्पदगणः पार्श्वं न मुञ्चति । हु निश्चितम् । 2) इअ उवजाइहिँ इत्यत्र गुञ्जद्बहुषट्पदं मारे प्रधाने केतकीस्फारे पुष्पवने कस्य रइं रतिं नार्पयति । काभिः । उपजातिभिः समीपस्थजातिभिः । कथंभूताभिः । सुरभिवाताभिः । 3) इअ वणराइहिमित्यत्र एव षट्पदोऽभिनवजातिषु वनराजिषु परिभ्रमति । क । जलदागमसमये मेघसमये । कीदृशः । मालतीरक्तः । पुनः कीदृक् । मधुरसमत्तः । 4) तुल्यसमपादेति – तुल्यौ सदृशौ समौ द्वितीयचतुर्थौ पादौ यस्याः अथवा तुल्यौ विषमौ प्रथमतृतीयौ यस्याः इति लक्षणेनान्तरं व्यवधानं भवति ।

---

१ परिमलु॰ A. २ दुर B; दुह D. ३ मिलइ E. ४ गण E, गुन A. ५ अट्ठो पंजाई: A; अट्ठो उप- जाईः N. ६ जुअ D;

तत्रान्तरसमाः प्राह –

चतुष्पदी कला ओजे सप्ताद्याः षोडशान्ताः समे प्रत्येकं सैकाः सप्तदशान्ताः 'चम्पककुसुम-सामुद्रक-मल्हणक-सुभगविलास-केसर-रावणहस्तक-सिंहविजृम्भित-मकरन्दिका-मधुकरविलसित-चम्पककुसुमावर्त्ताः (१०)। मणिरत्नप्रभा-कुङ्कुमतिलक-चम्पकशेखर-क्रीडनक-वकुलामोद-मन्मथतिलक-मालाविलसित-पुण्यामलक-नवकुसुमितपल्लवाः (९)। मलयमारुत-मदनावास-माङ्गलिका-अभिसारिका-कुसुमनिरन्तर-मदनोदक-चन्द्रोद्योत-रत्नावल्यः (८)। भ्रूवक्रणक-मुक्ताफलमाला-कोकिलावली-मधुकरवृन्द-केतकीकुसुम-नवविद्युन्माला-त्रिवलीतरङ्गकाणि (७)। अरविन्दक-विभ्रमविलसितवदन-नवपुष्पन्धय-किन्नरमिथुनविलास-विद्याधरलीला-सारङ्गाः (६)। कामिनीहास-अपदोहक-प्रेमविलास-काञ्चनमाला-जलधरविलसिताः (५)। अभिनवमृगाङ्कलेखा-सहकारकुसुममञ्जरी-कामिनीक्रीडनक-कामिनीकङ्कणहस्तकाः (४)। सुखपालनतिलक-वसन्तलेखा-मधुरालापिनीहस्ताः (३)। सुखपङ्क्ति-कुसुमलतागृहे (२)। रत्नमाला' (१)। इति पञ्चपञ्चाशद्भेदा ॥ १९ ॥

ओजयोः सप्ताद्याः षोडशान्ताः कलाः समयोस्ता एवैकाधिकाद्याः सप्तदशान्ताः प्रत्येकं यत्र भवन्ति सा चतुष्पदी चम्पककुसुमादिसंज्ञा । अयमर्थः – ओजे सप्त कलाः समे सैकाद्या अष्टाद्याः सप्तदशान्ता यत्र भवन्ति सा चम्पककुसुमादिभेदेन दशविधा। एवमोजेऽष्टकलाः समे सैकाद्या नवाद्याः सप्तदशान्ता यत्र भवन्ति सा मणिरत्नप्रभादिभेदेन नवविधा। तथा ओजे नव समे सैकाद्याः दशाद्याः सप्तदशान्ता यत्र भवन्ति सा चतुष्पदी मलयमारुतादिभेदेनाष्टविधा। यावदोजे षोडश समे सप्तदश यत्र भवन्ति सा रत्नमालासंज्ञा चतुष्पदी। एवं पञ्चपञ्चाशच्चतुष्पदीभेदाः। तत्रौजे सप्त समेऽष्टौ चम्पककुसुमम्। यथा –

> "अंगचंगिम, जइ गोरंगिहिं ।
> चंपयकुसुम, ता कह अग्घहिं" ॥ १९.१ ॥

ओजे सप्त समे नव सामुद्रकम्। यथा –

> "जइ वोहुइ, धण उक्कंठिअ ।
> सा मुद्दउ, मुद्दु कलयंठिअ ॥ १९.२ ॥

1) अंगचंगिमेत्यत्र यदि गौराङ्ग्या अङ्गचङ्गिमा स्यात्तदा चम्पककुसुमानि कथं अर्घ्यन्ते। 2) जइ वोहुइ इत्यत्र यदि सा उत्कण्ठिता सती धन्या अस्ति तदा कलकण्ठी मुखं मुद्रयतु।

१ चतुष्पदी dropped in BRPP. २ नव dropped in H. ३ रत्नमाला चेति पव॰ DPGH. ४ भेदाः ABCNP. ५ सा अन्तरसमा च॰ P. ६ जट्या A. ७ अग्घिहिं E. अग्घहि P. ८ घण AS.

ओजे सप्त समे दश मल्हणकम् । यथा—

"कहिं हंसिहिं, तलोवेल्लणउं ।
जेउ दीसइ, गउ वहिं मल्हणउं ॥ १९.३ ॥

ओजे सप्त समे एकादश सुभगविलासः । यथा—

"पइं विणु तहिं, सुहय विलासु करणु ।
विणु चंदइं, सुहु जामिणिहिं ठरेणु ॥ १९.४ ॥

ओजे सप्त समे द्वादश केसरम् । यथा—

"मेल्लि' माणु, वह्लहिं करि अणुराउ ।
ओ उंट्ठिउ, केसरउसुमराउ ॥ १९.५ ॥

ओजे सप्त समे त्रयोदश रावणहस्तकः । यथा—

"लेहि वीण, करि धरि रावणहत्थउ ।
जिणमज्जणि, सुरहिं दिण्णु सव्वहत्थउ ॥ १९.६ ॥

ओजे सप्त समे चतुर्दश सिंहविजृम्भितम् । यथा—

"दुल्लहु वि, जं मयजहु न तिणु चरइ ।
तं धन्न वि, सीहविअंभिउं विप्फुरइ ॥ १९.७ ॥

ओजे सप्त समे पञ्चदश मकरन्दिका । यथा—

"कुसुमंतरि, नवि रमइ अलि अवनिरिंजइ ।
आगयउ, मालइहि मयरंदपरिंदिअहि ॥ १९.८ ॥

ओजे सप्त समे षोडश मधुकरविलसितम् । यथा—

[1]जं जाइहि, किन्ति दिअंतरु धवलइ सयलु।
तं जाणेसु, माणिणि महुअरविलसिउं पवर्लु ॥ १९.९ ॥

ओजे सप्त समे सप्तदश चम्पककुसुमावर्तः। यथा—

[2]निअइ झुणइं, परिरंभइ चुंबइ महुसुंडउ।
अलि मुज्झइ, चंपयकुसुमाघट्टि निवुड्डउ ॥ १९.१० ॥

एवं दश ॥ १९.१० ॥

तथा। ओजे अष्टौ समे नव मणिरत्नप्रभा। यथा—

[3]मणिरयणपहा-, पयडिअगिरिगुंहु।
साहइ भरहु, सयलु वि दिसिमुहु ॥ १९.११ ॥

ओजे अष्टौ समे दश कुङ्कुमतिलकम्। यथा—

[4]रेहइ चंदो, नवपयडिअकलओ।
पुव्वदिसाए, किर कुंकुमतिलओ ॥ १९.१२ ॥

ओजे अष्टौ समे एकादश चम्पकशेखरः। यथा—

[5]अलिरवगीई, कयचंपयसेहरे।
महुसमयसिरी, उंअ जणहु मणोहर ॥ १९.१३ ॥

ओजे अष्टौ समे द्वादश क्रीडनकम्। यथा—

[6]सहि वट्टुलेउ, चंदुल्लउ पडिहाइ।
रयणिवहूए, कीलणगेंड्डुउं नाइं ॥ १९.१४ ॥

ओजे अष्टौ समे त्रयोदश बकुलामोदः। यथा—

[7]मन्नावि पिउ, जइ वि हु सो कयदुव्वेउ।
जं महमहइ, दुसहउ बउलामोअउं ॥ १९.१५ ॥

1) जं जाइहिमित्यत्र। यत् जातिः कीर्त्या (जातेः कीर्तिः ?) धवलीकरोति। किम्। दिगन्तरम्। तत् हे मानिनि मानय भ्रमरविलसितम्। अत्र अन्योक्तिः स्वमया तस्या गौणकथनम्। 2) निअइ झुणइ इत्यत्र हे मित्र पश्य। शौण्ड इव शौण्डो मद्यपः। मत्तश्चासौ शौण्डश्च मत्तशौण्डोऽलिर्निरीक्षते ध्वनति परिरम्भति उपगूहति चुम्बति चम्पककुसुमावर्ते निमग्नः सम्मुह्यति मोहं भजति। 3) मणिरयणेत्यत्र मणिरत्नप्रभाभिः प्रकटिता गिरिगुम्फा यस्मात् स तथा। एवंविधो भरतः साधयति सकलमपि दिङ्मुखम्। 4) रेहइ चंदो इत्यत्र राजते चन्द्रः नूतना प्रकटिता कला येन सः। किलेति उत्प्रेक्षते। पूर्वदिशः कुङ्कुमतिलकः। 5) अलिरवेत्यत्र अलिरव एव गीतिर्गानं यस्याः सा कृतश्चम्पक एव शेखरो यया सा। अयं श्रीधर्मः। एवंविधां जनानां मनोहरां मधुसमयश्री(श्रियं) पश्य विलोकयेत्यर्थः। 6) सहि वट्टुलउ इत्यत्र हे सखि वृत्तश्चन्द्रः प्रतिभाति। नाइ इति उत्प्रेक्षते। रजनीवध्वाः क्रीडागेन्दुकः। 7) मन्नावि इत्यत्र हे सखि यद्यपि कृतदुर्नयः प्रियो वर्तते तथापि। मन्नावीति—आत्मसात्कुरु। यस्मान्महमहेति इति गन्धं भजते। कः। दुःसहो बकुलामोदः। यस्त्वागमसूचनमिति।

१ दिअंतरु N; दिगंतरु A. २ जाणिसु B; माणसु K; ३ विलसिअ A. ४ पवलु A. ५ जुझुणइ A; झुणइ N; झणइ S. ६ निवुड्डुओ N. ७ गिरिगुह BP. ८ भरहो P. ९ सिहर N. १० ओअ N. ११ वट्टुलओ N. १२ गेंडुउ P; गेंडुओ N. १३ नाइ N. १४ पिओ—दुव्वओ N. १५ मोअओ N.

ओजे अष्टौ समे चतुर्दश मन्मथतिलकम् । यथा—

[1]निम्मलि गयणि, समुग्गउ चंदु विहावइ ।
रईए रइउ, वम्महतिलउ नवु नावइ ॥ १९.१६ ॥

ओजे अष्टौ समे पञ्चदश मालाविलसितम् । यथा—

[2]कमलिणिपासि, अलिमाला विलसिअ संपइ ।
कलरवमिसिण, किर मित्तसमागमु जंपइ ॥ १९.१७ ॥

ओजे अष्टौ समे षोडश पुण्यामलकम् । यथा—

[3]मइं असरण तुहु, अइनिद्दय नडसि कुसुमाउह ।
जं किर पुण्णा, मलयसमीरिण सयल वि कउहं ॥ १९ १८ ॥

ओजे अष्टौ समे सप्तदश नवकुसुमितपल्लवः । यथा—

[4]कंपिअ निअवि, नवकुसुमिअपल्लव सललिअ लय ।
संभरि दइअ, पथिअसत्थे तक्खणि गय विलय ॥ १९.१९ ॥
एवं नव ॥ १९.१९ ॥

तथा । ओजे नव समे दश मलयमारुतः । यथा—

[5]देक्खिवि वेल्लडी, मलयमारुअधुआ ।
सुमरिवि गोरडी, पथिअसत्थ मुआ ॥ १९.२० ॥

ओजे नव समे एकादश मदनावासः । यथा—

[6]जं धणलोअण, झसज्झय चल दीसहिं ।
मयणावासउ, तं थणुइरि सइं ॥ १९.२१ ॥

1) निम्मलि गयणीत्यत्र निर्मले गगने समुद्गतश्चन्द्रो विभाति । नावइ इति इवार्थे । विभाव्यते रत्या रचितो मन्मथतिलक इव । 2) कमलिणिपासीत्यत्र कमलिनीपार्श्वे साम्रत अलिमाला विलसति । किलेति संभाव्यते । कलरवमिषेण मित्रस्य सूर्यस्य समागम जपति कथयति । 3) मइ असरण इत्यत्र तस्मात्कारणात् हे कुसुमायुध मां अशरणा खेदयसि यस्मान्मलयसमीरणेन सकला अपि ककुभ पूर्णा । 4) कंपिअ निअवीत्यत्र कम्पिता. । निअवीति—दृष्ट्वा । कुसुमितपल्लवा सलीला लता । स्मृत्वा च दयिता पथिकसार्थे विलय मरण प्राप्त । 5) देक्खिवीत्यत्र दृष्ट्वा । का । मलयमारुतधुता वल्ली । ततो गौरीः स्मृत्वा । ता अपि चञ्चलरूपा भवन्ति । पथिकसार्थो मृत । 6) ज धण इत्यत्र यत् धन्याया लोचनान्येव झषध्वजा मत्स्यकेतवश्चला दृश्यन्ते । लोचनानि हि चपलत्वात् मीनरूपाणि वर्ण्यन्ते । तत् ज्ञायते मदनावासः स्तनप्रदेशे सन्तीति ।

१ निम्मलग॰ A २ समुग्गओ BN ३ रइप॰ N ४ तिलओ N ५ विसल्सिअ N, विलसइ K ६ मेत्त॰ गमु B, मित्तसमागम A ७ अइनिद्दय N ८ कुसुमदि उह N ९ पुण्फा N, पुन्ना P. १० कओह S. ११ सत्थु B १२ दिक्खिवि B १३ धुअ BP १४ मुअ BP १५ दीसइ P १६ थणगुहिर N, थणगुहिर AO, थणगुवुरि S.
२५ छन्दो॰

- ओजे नव समे द्वादश माङ्गलिका । यथा–

"[1]प्रिअमहुसंगमि, उअ मंगलिअइं करइ ।
किंसुअरूविण, वणसिरि घट्टइं[2] धरइ ॥ १९.२२ ॥

ओजे नव समे त्रयोदश अभिसारिका । यथा–

"[2]काली रत्तडी, घणिहिं नहंगणु रुद्धंउ[3] ।
तो वि न वट्टहिं, अहिसारिअजणु खुद्धंउ[4] ॥ १९.२३ ॥

ओजे नव समे चतुर्दश कुसुमनिरन्तरः । यथा–

"[3]सिद्धत्थ पुलय, कुसुम निरन्तरु हसिउ सिउ ।
नवदइआगमि, अंगि जि मंगलु धणइ किउं[5] ॥ १९ २४ ॥

ओजे नव समे पञ्चदश मदनोदकम् । यथा–

"[4]घणरव दूसहा, दूहवइ मयणोदउ हिअउ ।
पिअदूरट्ठिआ, पवसिअरमणिअणु कह जिअउ ॥ १९.२५ ॥

ओजे नव समे षोडश चन्द्रोद्द्योतः । यथा–

"[5]कोइलकलरवु, चंदणु चंदुज्जोअविलासु ।
पहहसंगमि, अमयरसु विरहि जलिउ हुआसु ॥ १९.२६ ॥

ओजे नव समे सप्तदश रत्नावली । यथा–

"[6]माळइमाळहिं, अलि सहहिं नवमयरंदसइण्ह[7] ।
[8]नं रयणावलि, नीलमय पाउसदइएण[9] दिण्णं[10] ॥ १९.२७ ॥
एवमष्ट ॥ १९.२७ ॥

तथा । ओजे दश समे एकादश भ्रूचक्रणकम्[11] । यथा–

"[7]रेहइ तरुणिअणुं[12], भूवंकणचंगउ[13] ।
आणावइ नाह, तिहुअणजई[14] अंगउ ॥ १९.२८ ॥

1) प्रियमहुसंगमीत्यत्र उभक्ति–पश्य । वनश्रीः प्रियो वल्लभो यो मधुर्वसन्तस्तस्य सगमे सबन्धे माङ्गलिकानि करोति । किंशुकरूपेण घट्टयुगलं दधाति । घट्टो घाटडीति प्रसिद्धा । 2) काली रत्ते-त्यत्र रात्रिः कृष्णा तथा गगनाङ्गणं घनैः रुद्धं तथापि मार्गे अभिसारिकाजनो न क्षुब्धः । भीतभाव इत्यर्थः । 3) सिद्धत्थेत्यत्र पुलका एव सिद्धार्थाः । सितं हसितं कुसुमानि । निरन्तर नवदयितसंगमे अङ्गे मङ्गलं भार्यया कृतम् । 4) घणरव दूसहेत्यत्र घनानां रवा दुःसहाः । दुनोति मदनोदयो हृदयम् । प्रियदूरस्थितः दूरस्थित-धनिकः । प्रोषितानां रमणीजनः कथं जीवति । 5) कोइलकलेत्यत्र कोकिलकलरवः चन्दनं चन्द्रोद्द्योतविलासः एतान्येव वल्लभसंगमे अमृतरसः । विरहे सति तान्येव ज्वलितो हुताशः । 6) माळइमाळहिं इत्यत्र मालती-मालायां अलयः शोभन्ते । कीदृशा अलयः । नवमकरन्दसतृष्णाः । किमित्यध्याहारः । प्रावृड्दयितेन दत्ता नीलेन्द्रमयी रत्नावलीव । णं इति उपमानार्थः । 7) रेहइ इत्यत्र राजते तरुणीजनः भ्रूचक्रेण चङ्गः । [illegible] उत्प्रेक्षते । त्रिभुवनजयी अनङ्गः आज्ञापयति जनानामिति शेषः ।

१ ओअ NS. २ घट्ट्य P. ३ रुद्धउं D; रुद्धओ N. ४ खुद्दओ N. ५ किमउ D. ६ जहिं B. ७ सयण्ह P. ८ णं K; तं B; न N. ९ पाउसदयइण B, पाओसदइसदा S १० दिष A. ११ भ्रूचक्र॰ DKN; १२ तरुणिअणु S. १३ भूचंकणचंगओ DN. १४ जयि A.

ओजे दश समे द्वादश मुक्ताफलमाला । यथा—

[1]"तारावलि भणि मा, भणि मुत्ताहलमाली ।
रइकलहिण त्रुट्टी, ससिरयणिहिं सुविसाली ॥ १९.२९ ॥

ओजे दश समे त्रयोदश कोकिलावली । यथा—

[2]"कोइलावलिकिए, संगीअइ नचावउ ।
नवलयविलयाओ, मलयानिलु नट्टावउ ॥ १९.३० ॥

ओजे दश समे चतुर्दश मधुकरवृन्दम् । यथा—

[3]"फुल्लिअलय निअवि, महुअरवंद्रिण गीउ तह ।
बाहोल्लयनयण, पयमवि पहिअ न दिंति जह ॥ १९.३१ ॥

ओजे दश समे पञ्चदश केतकीकुसुमम् । यथा—

[4]"विंयालिउ भुवणु, नवकेअइकुसुमपराईण ।
नं अहिवासिअउं, मयरद्धयकम्मणजोइण ॥ १९.३२ ॥

ओजे दश समे षोडश नवविद्युन्माला । यथा—

[5]"ओ चलचलंतिआ, विप्फुरेइ नवविज्जुमालिआ ।
मेहब्भसस्स, जीहिअव्व दीहरकरालिआ ॥ १९.३३ ॥

ओजे दश समे सप्तदश त्रिवलीतरङ्गकम् । यथा—

[6]"दीहरच्छिआए, पेच्छ सहए तिवलीतरंगयं ।
कयतिहुअणविजए, लीहतिअं पिव कामिण कड्डिअं" ॥ १९.३४ ॥

एवं सप्त ॥ १९.३४ ॥

तथा । ओजे एकादश समे द्वादश अरविन्दकम् । यथा—

[7]"निअहि मुद्ध अरविंदु, चलनयण इंदिदिरु ।
दंतकंति केसरु, लच्छिविलासमंदिरु ॥ १९.३५ ॥

1) तारावलीत्यत्र हे सुभग तारावलीं मा भण । किं तर्हि मुक्ताफलमालां भण । रतिकलहेन त्रुटितां शशिरत्नयोः सुविशालाम् । 2) कोइलावलीत्यत्र कोकिलावलीभिः संगीयते नर्त्यन्तु नवलताबनिताः कर्म । मलयानिलः पुन नर्तकः । 3) फुल्लिअलयेत्यत्र पुष्पितलताः निरीक्ष्य मधुकरवृन्देन यथा गीतं यथा बाष्पार्द्रितनयनाः पदमपि न ददति । कं । पथिकाः । 4) विंयालिउ इत्यत्र । नूतनकेतकीपरागेण भुवनं विंयालितमसि—व्याप्तम् । नत्विति—उत्प्रेक्षायाम् । मकरध्वजकार्मणयोगेनाधिवासितमिव । 5) ओ चलेत्यत्र विस्फुरति नवविद्युन्मालिका । इयोऽव्ययं । मेघाभ्रमस्य दीर्घा कराला जिह्वेव । 6) दीहरच्छिआए इत्यत्र दीर्घाक्ष्याः पश्य राजते त्रिवलीतरङ्गकं त्रिभुवनविजये इते कामेन रेखात्रिकमिव कर्षितम् । न मत्सदृशो भुवनत्रये कोऽपि जयतीति भावः । 7) निअहि मुद्ध इत्यत्र निरीक्षस्व मुग्धे कमलं वर्तते चलनेत्रा(त्र) भ्रमरो दन्तकान्तिः केसराणि लक्ष्मीविलासमन्दिरम् ।

१ [चलि] CDA; २ सुविसालि N. ३ वलिआओ A. ४ मलयानिल D. ५ वंद्रिण S; वइन C. ६ बाहुल्लनयण B. ७ पराइन D. ८ मह्ह० A. ९ जीहिअव्व N. १० दीहरच्छीआए AN. ११ पिच्छ E. १२ तिहुअन A. १३ कड्डिअं N. १४ निअहि AB; पिअहि E. १५ केसर A. १६ विलासमंदिरु B. विलासमंदिरु A.

ओजे एकादश समे त्रयोदश विभ्रमविलसितवदनम्। यथा–

"[1]कुइ धन्नु जुआणउ, विअसिअदीहरनयणिऍ[1]।
माणिज्जइ तरुणिए, विब्भमविलसिअवयणिऍ[2][3] ॥ १९.३६ ॥

ओजे एकादश समे चतुर्दश नवपुष्पन्धयम्। यथा–

"[2]सहि पंकोप्पन्नु[4] वि, कमलु तं सलहिउँ[5] बुहसइहिं।
जं रसउद्धुसिअहिं[6], पिज्जइ नवफुल्लंधुअहिं ॥ १९.३७ ॥

ओजे एकादश समे पञ्चदश किन्नरमिथुनविलासः। यथा–

"[3]अविरहिअइं मुइअइं, हरिणइं जि रइसुहु सलीसए।
पर एम्वइ केम्वइ[7], जसु[8] किन्नरमिहुणविलासए ॥ १९.३८ ॥

ओजे एकादश समे षोडश विद्याधरलीला। यथा–

"[4]मुद्धइ गिज्जंतउं, तुहुं कण्णरसायणु गीउ सुणि।
जिण ओहामिज्जइ, विज्जाहरलीलागीइझुणि ॥ १९.३९ ॥

ओजे एकादश समे सप्तदश सारङ्गः। यथा–

"[5]भीरु वि चंदट्ठिओ, वरि परिमुणिअनामु[9] सारंगओ।
सीहु न सलहिज्जइ[10], जइ वि हु दलिअमत्तमायंगओ ॥ १९.४० ॥

एवं षट् ॥ १९.४० ॥

तथा। ओजे द्वादश समे त्रयोदश कामिनीहासः। यथा–

"[6]मणहरु[13] तुहुं[14] मुहसररुहु[15], रयणीअरविब्भमु धरइ।
कामिणि हासविलासु[16] वि, जोण्हापसरहु[17] अणुहरई[18] ॥ १९.४१ ॥

1) कुइ धन्नु इत्यत्र कोऽपि धन्यो युवा विकसितदीर्घनयनया तरुण्या मान्यते। कीदृश्या। विभ्रमविलसितवदनया। तस्याः रूपोत्कर्षः। 2) सहि पंकोप्पन्नु वीत्यत्र हे सखि तत्कमलं बुधशतैः सलहिउं श्लाघितं यत् रसोद्धुषितैः पुष्पंधयैः पीयते। पङ्कोत्पन्नमिति निन्दा। 3) अविरहिअइं इत्यत्र अविरहितानां मुदितानां हरिणानामेव रतिसुखं श्लिष्यति भवतीति। परमेवमेव कथमपि यशः किन्नरमिथुनविलासे। दम्पत्योः प्रीत्युपरि तस्योपमानात्। 4) मुद्धइ गिज्जंतउं इत्यत्र मुग्धया गीयमानं त्वं कर्णरसायनं गीतं शृणु। येन गीतेन विद्याधरलीलागीतिः पराभूयते निराक्रियते इत्यर्थः। 5) भीरु वीत्यत्र भीरुरपि चन्द्रस्थितः वरः प्रधानः। कः। विख्यातनामा सारङ्गो हरिणः। परं सिंहो न श्लाघ्यते यद्यपि दलितमत्तमातङ्गः। 6) मणहरु तुहेत्यत्र हे सुभगे तव मुखसरोरुहं रजनीकरविभ्रमं धरति। हे कामिनि तव हास्य ज्योत्स्नाप्रसरं अनुहरति तच्छीलं भजतीत्यर्थः।

१ धण्णु A. १९.३६ is dropped in D. २ नयणीए AS. ३ वयणीए AS. ४ पंकुप्पनु [illegible] AB. ५ लसहिओ N. ६ उद्धुसिएहिं S. [illegible] कीम्वइ ABDN, काम्वइ S. ८ नमु S ९ कम ACDNP. १० हिउ–गउ–गउ BE. ११ नामु AC; नाउं P; नाम्नु DS. १२ सलहिज्जउ P. १३ मणहर C. १४ तुहु ACDN. १५ सररुह AN. १६ हासुवि० P. १७ पसरह P, पसरहो B. १८ अणुसरह A.

ओजे द्वादश समे चतुर्दश अपदोहकः । यथा–

[1]एत्थु करिमि भणि काइं, पिउँ न गणइ लग्गी पाइ ।
छड्डेविणुँ हउं मुक्की, अवदोहय जिम्व किर गाँवि ॥ १९.४२ ॥

ओजे द्वादश समे पञ्चदश प्रेमविलासः । यथा–

[2]कित्तिउँ वण्णउं मयणु, किअउ जिण सो वि नारायणु ।
तहुँ गोवालीअणहु, घणपिम्मविलासपरायणु ॥ १९.४३ ॥

ओजे द्वादश समे षोडश काञ्चनमाला । यथा–

[3]दीसइ सुरधणुलट्ठी, साम्वलगोरवण्णसोहिल्ली ।
मरगयकंचणमाली, णं घणलच्छिहि कंठि नवल्ली ॥ १९.४४ ॥

ओजे द्वादश समे सप्तदश जलधरविलसिता । यथा–

[4]पेक्खिऊँण गयणयलि, नवजलहरविलसिअ चलविज्जुल ।
संभरंति निअपिअंहं, पहिअदइअ गलिअंसुअकज्जल ॥ १९.४५ ॥

एवं पञ्च ॥ १९.४५ ॥

तथा । ओजे त्रयोदश समे चतुर्दश अभिनवमृगाङ्कलेखा । यथा–

[5]नहयलवराहदाढिआ, वारुणिवहुइ णिडालिआ ।
अहिणवमिअंकलेहिआ, उप्पइ पीइं निहालिआँ ॥ १९.४६ ॥

ओजे त्रयोदश समे पञ्चदश सहकारकुसुममञ्जरी । यथा–

[6]वणलच्छिकणयरसणिओ, कुसुमाउहविजयपडाइआ ।
सहयारकुसुममंजरी, उअँह महुसमएण पयडिआ ॥ १९.४७ ॥

1) इत्थु करिमि भणीत्यत्र हे सखि अत्रार्थे किं करोमि । भण कथय । प्रियो न गणयति । मामिति शेषः । किम् । पादपतिताप्यहं त्यक्त्वा(क्ता) । मुक्ताऽपदोहका दोहविहीना यथा गौर्मुच्यते । 2) किलिउँ वण्णउं इत्यत्र मदनं कियद्वर्णयामि । येन सोऽपि नारायणः तथा कृतः । तथेति कथम् । गोपालिकानां घन-प्रेमपरायणः । तत्परः इत्यर्थः । 3) दीसइ सुरेत्यत्र दृश्यते सुरधनुर्यष्टिः श्यामलगौरवर्णेन शोभनशीला । यामिति इवोत्प्रेक्षते । मरकतकाञ्चनमाला घनलक्ष्म्याः कण्ठे नूतना । 4) पेक्खिऊणेत्यत्र प्रेक्ष्य गगनतले नवजलधरविलसितं चलविद्युत् स्मरन्ति निजप्रियान् स्वकीयप्रियान् पथिकदयिताः गलिताश्रुकज्जलाः । 5) नह-यलेत्यत्र अभिनवमृगाङ्कलेखा निभालिता दृष्टा सती प्रीतिमर्पयति । इयं किं नभस्तलवराहदाढिका अथवा वारुणीदिग्वध्वाः ललाटिका तिलकिका इत्यर्थः । 6) वणलच्छिकणयेत्यत्र हे सुभगे उअह पश्य त्वम् । मधुसमयेन सहकारमञ्जरीः प्रकटिताः । इवोत्प्रेक्षते । वनलक्ष्मीकनकमेखला अथवा कुसुमायुधविजयपताकिका ।

१ इत्यु BKP. २ पिउ A. ३ छड्डेविणु NS. ४ गाइ ABP. ५ कित्तिओ M. ६ नरायणु S. ७ तह P. ८ पेम्म॰ BP; पिम्मविलासुप॰ A. ९ गोरवण N; गोरवन्न ABP. १० पिक्खि॰ CDNS. ११ प्रियइं A. १२ मयंगले॰ A. १३ अप्पइ KP; उप्पहि S. १४ निडालिआ B. १५ रमणिआ N. १६ ओअहु A; ओअह N.

ओजे त्रयोदश समे षोडश कामिनीक्रीडनकम्। यथा–

"नहलच्छिभालतिलओ, दिसिकामिणिकीलणगंडुअओ।
रेहइ पुण्णमयंकओ, मयणाहिसेअअमयकलसओ ॥ १९.४८ ॥

ओजे त्रयोदश समे सप्तदश कामिनीकङ्कणहस्तकः। यथा–

"कवणु सु धन्नउ जिण विणु, कामिणिकंकण हत्थउ विअलहिं।
अन्न कि एम्वइ ससिमुहि, हिंडइ उन्नमिईहिं करकमलिहिं ॥ १९.४९ ॥

एवं चत्वारः १९.४९ ॥

तथा। ओजे चतुर्दश समे पञ्चदश मुखपालनतिलकः। यथा–

"इह माहवि वम्महनिलय, मलयानिलहल्लिरकिसलय।
ओ दीसहिं कुसुमोउलय, कामिणिहुं मुहवालण तिलय ॥ १९.५० ॥

ओजे चतुर्दश समे षोडश वसन्तलेखा। यथा–

"कुविदो मयणो महाभडो, वणलच्छी अ वसंतरेहिआ।
कह जीवेउ मामि विरहिणी, मिउमलयानिलफंसमोहिआ ॥ १९.५१ ॥

ओजे चतुर्दश समे सप्तदश मधुरालापिनीहस्तः। यथा–

"सुन्दरु तं पिउ एहु सहि, पिउ जं मन्निउ विणयनिसण्णउ।
तसु अवराहहं सव्वहं चि, महुरालाविणि हत्थु विइण्णउ ॥ १९.५२ ॥

एवं त्रयः ॥ १९.५२ ॥

1) नहलच्छिभालेत्यत्र पूर्णमृगाङ्कः शोभते। इवोत्प्रेक्षते। नभस्तललक्ष्मीभालतिलकं दिक्कामिनीक्रीडनगेन्दुकः इडउ (?) इति प्रतीतम्। अथवा मदनाभिषेकायामृतकलशः। 2) कवणु [illegible] धन्नउ इत्यत्र कः स धन्यो येन विना कामिन्याः कङ्कणानि हस्ताद्विगलन्ति। अन्याः मुग्धाः हे शशिमुखि हिण्डन्ते उन्नमिति–ऊर्ध्वीकृतैः करकमलैः? अपि तु न काप्येवं हिण्डते। त्वं तु ऊर्ध्वीकृतकरकमला हिण्डसे। तेन ज्ञायते तव करकङ्कणानि गलन्ति हस्तयोः। 3) इह माहवि वम्महेत्यत्र इह माधवे वसन्ते मन्मथनिलयमलयानिलचलत्किसलयाः दृश्यन्ते कुसुमाकुलकाः कामिनीनां मुखवालनाः तिलका वृक्षाः। कामिनीनां मुखवालना इति कोऽर्थः। गच्छन्त्योऽपि मुखं पश्चादभिमुखं कृत्वा निरीक्षन्ते। 4) कुविदो मयणो इत्यत्र कुपितो मदनो महाभटः। च पुनः। वनलक्ष्मीर्वसन्तेन रेखिता शोभिता। मामीति मन्ये। इदानीं मृदुमलयानिलस्पर्शमोहिता विरहिणी कथं जीवतु। अपि तु नेति 5) सुन्दरु तमित्यत्र सुन्दरं एतत्कृतं वत्सस्ति यत्प्रियो मानितो विनयनिषण्णोऽवनतः सन्। तस्य प्रियस्य सर्वेषामप्यपराधानां मधुरालापकेन हस्तो वितीर्णः। कृतजलाञ्जलिरित्यर्थः।

१ तिलयउ B. २ कामिणी C. ३ गिंडुअओ P; कंदुअओ A; गंडुअओ N; गेंदुअउ B. ४ पुण्णम॰ [illegible]; पुण्णमयंगओ A; पुण्णमइंकओ P. ५ हत्थओ AN. ६ अन्नु वि A; ७ हिंडहि P. ८ उन्नमिअहिं P. ९ कुसुमाओलय [illegible]. १० कामिणिहिं BE. ११ जीवइ A. १२ मउम॰ BE. १३ फुंस॰ A. १४ किओ एहु N. १५ मणिउ N8; मण्णिउ CD. १६ णिणयनिसण्णउ A; विणयनिसन्नउ [illegible]. विणयनिसण्णओ N. १७ लाविणि P. १८ हत्थ A. १९ विइण्णओ N, विइन्नओ P.

तथा । ओजे पञ्चदश समे षोडश मुखपङ्क्तिः । यथा—

[1]"परनरमुहपेच्छणविरएए, पर्यनहमणिपडिबिंबिअ जि परि ।

दहमुहमुहपंति पलोइआ, सीअँइ भयविम्हयहासकरि ॥ १९.५३ ॥

ओजे पञ्चदश समे सप्तदश कुसुमलतागृहम् । यथा—

[2]"जलइ जइ वि कुसुमलयाहरु, तवइ चंदु जँह गिम्हि दिवायरु ।

तुवि ईसाभरपरितरलिअ, पिअसहिवयणु न मन्नइ बालिअ ॥ १९.५४ ॥

एवं द्वे १९.५४ ॥

ओजे षोडश समे सप्तदश रत्नमाला । यथा—

[3]"करवालपहारिण उच्छलिअँ, करिसिरमुत्ताहलरयणमालं ।

रेहइ समरंगणि जयसिरिए", उक्खिविअ नाइ सयंवरमाल ॥ १९.५५ ॥

अत्रैकः । एवं पञ्चपञ्चाशद्भेदाः ॥ १९.५५ ॥

व्यत्यये सुमनोरमा-पङ्कज-कुञ्जर-मदनातुर-भ्रमरावली-पङ्कजश्री-किङ्किणी-कुङ्कुमलता-शशिशेखर-लीलालयाः (१०) । चन्द्रहास-गोरोचना-कुसुमबाण-मालतीकुसुम-नागकेसर-नवचम्पकमाला-विद्याधर-कुन्जककुसुम-कुसुमास्तरणाः (९) । मधुकरीसंलाप-सुखावास-कुसुमलेखा-कुवलयदाम-कलहंस-सन्ध्यावली-कुञ्जरललिता-कुसुमावल्यः (८) । विद्युल्लता-पञ्चाननललिता-मरकतमाला-अभिनववसन्तश्री-मनोहरा-क्षिसिका-किन्नरलीलाः (७) । मकरध्वजहास-कुसुमाकुलमधुकर-भ्रमरविलास-मदनविलास-विद्याधरहास-कुसुमायुधशेखराः (६) । उपदोहक-दोहक-चन्द्रलेखिका-सुतालिङ्गन-कङ्केल्लिलताभवनानि (५) । कुसुमितकेतकीहस्त-कुञ्जरविलसित-राजहंस-अशोकपल्लवच्छायाः (४) । अनङ्गललिता-मन्मथविलसित-ओहुल्लणकानि (३) । कञ्चललेखा-किलिकिञ्चिते (२) । शशिबिम्बितं चेति (१) । तावद्वा ॥ २० ॥

1) परनरमुहेत्यत्र परनरमुखप्रेक्षणविरतया सीतया पदनखमणिप्रतिबिम्बितैव दशमुखमुखपङ्क्तिः परं केवलं प्रलोकिता । नापरा । कथंभूता । भयविस्मयहासकरी । भयं परपुरुषदर्शनात् । विस्मयहासे च बहुमुखत्वेन । 2) जइ जलइत्यत्र यद्यपि कुसुमलतागृहं ज्वलति चन्द्रोऽपि ग्रीष्मे दिवाकरवत् तपति तथापि भर्तुरन्यत्र गत्वागतत्वात् बालिका भर्तृसखीवचनं नाङ्गीकुरुते । कीदृशी । ईर्ष्याभरेण परितरला चञ्चला । कोपप्रादुर्भावे चञ्चला भवति । 3) करवालेत्यत्र समराङ्गणे करवालप्रहारात् करिशीर्षात् उच्छलिता मुक्ताफलरत्नमाला इह शोभते इत्युत्प्रेक्षते । जयश्रिया स्वयंवरमाला उत्क्षिप्ता ऊर्ध्वीकृता । नाइ इवार्थे ।

१ मुहु N. २ विरअए B. ३ पहनह S. ४ सीअए ACDN . ५ जइ A. ६ ईसाभरि BP. ७ उच्छलिल N ८ माला ACDNP. ९ समरंगिणि C. १० जयसिरिद BEP. ११ शेषरा P १२ किंकिल्लिभवनानि B; कङ्कोलिलताभुवनानि C. १३ किलकिंचिते B

व्यत्यय इति समे सप्ताद्याः षोडशान्ताः कला ओजे सैकाद्याः सप्तदशान्ताः प्रत्येकं पूर्ववत्सुमनोरमादिसंज्ञाः चतुष्पद्यो भवन्ति। तत्र समे सप्तकलाः[1] ओजे अष्टौ यत्र भवन्ति सा सुमनोरमा। यथा–

> "[1]केआरावु, करि मोर मा।
> दूरि स गोरी, सुमणोरमा ॥ २०.१ ॥

समे सप्त ओजे नव पङ्कजम्। यथा–

> "[2]निअवि वयणु तर्हि, विब्भमपउं[2]।
> [3]नं विहिण खित्तु[4], द्रहि पंकउ[5] ॥ २०.२ ॥

समे सप्त ओजे दश कुञ्जरः। यथा–

> "[3]गज्जइ घणमाला, घणघट्टड।
> [6]नं मयणनिवइणो, कुंजरघड ॥ २०.३ ॥

समे सप्त ओजे एकादश मदनातुरः। यथा–

> "[4]खलिअक्खरउं वयणु, मुहुं पंडरु।
> तुह अक्खइ सहि मणु, मयणाउरु ॥ २०.४ ॥

समे सप्त ओजे द्वादश भ्रमरावली। यथा–

> "[5]ओ रणझणंत भमइ, भमरावलि।
> मयणधणुह गुणवलि, णं सामलि ॥ २०.५ ॥

समे सप्त ओजे त्रयोदश पङ्कजश्रीः। यथा–

> "[6]तहि भुमैयहि पडिछंदुलो, धणु मयणहु।
> नवपंकयसिरि सोअरी, तसु वयणहु ॥ २०.६ ॥

---

1) केआरावु इत्यत्र हे मयूर त्वं केकारवं मा कुरु। सा गौरी दूरे वर्तते। कीदृशी। अतिशयेन मनोरमा सुन्दरी। 2) निअवि वयणु इत्यत्र दृष्ट्वा वदनं तस्याः विभ्रमो भ्रूसमुद्भवो विलासस्तस्य पदम्। नमिवार्थे। विधिना पङ्कजं ह्रदे क्षिप्तम्। तस्या मुखतुल्यं दधत् मह्यम्य जलाशये क्षिप्तमिति भावः। 3) गज्जइ घणमालेत्यत्र घनो निविडो घडहड-शब्दविशेषो यस्याः सा घनमाला गर्जति। नमिवार्थे। इवोत्प्रेक्षते। मदननृपस्य कुञ्जरघटा। 4) खलिअक्खरउं इत्यत्र हे सखि वचनं स्खलिताक्षरं मुखं च पाण्डुरम्। उभयं कर्तृ मनः कर्म। आख्याति। मनः कीदृशम्। मदनातुरम्। 5) [ओ] रणरणंतेत्यत्र हे सखि पश्य रणरणन्ती शब्दं कुर्वाणा भ्रमरावली भ्रमति। इवोत्प्रेक्षते। श्यामा मदनधनुषः गुणवल्ली। ज्या इति भावः। 6) तहि भुमयहि इत्यत्र तस्या भ्रुवोः प्रतिच्छन्दो धनुर्मदनस्य। तस्या वदनस्य सोदरा नवपङ्कजश्रीः।

---

१ कलाः dropped in A. २ पओ N. ३ न D. ४ खेत्तु BP. ५ पंकओ AEN. ६ तं B. ७ मइण॰ BP. ८ महु B. ९ मयणाउर A. १० रणरणंत K; तरुणझणंत A. ११ तहिं भुमयहिं AB; तहि भुमयहिं F.

समे सप्त ओजे चतुर्दश किङ्किणी। यथा—

[1]"ससिणा रयणीए रइभरे, उल्लालिआँ।
ओ किंकिणिआउ न हु इमा, उडुमालिआँ॥ २०.७॥

समे सप्त ओजे पञ्चदश कुङ्कुमलता। यथा—

[2]"गोरडिअहिं उवमिअइ वँ पर, अचब्भुअ।
जइ किर हवइ फुल्लिअ फलिअ, कुंकुमलय॥ २०.८॥

समे सप्त ओजे षोडश शशिशेखरः। यथा—

[3]"लंघइ सायँर गिरि आरुहइ, तुह अहंग।
ससिसेहरहसिरुज्जल नरँखी, कित्तिगंग॥ २०.९॥

समे सप्त ओजे सप्तदश लीलालयः। यथा—

[4]"जं सहि कोइल कलु पुकारइ, फुल्लु तिलँउ।
तं पत्तु वँसंतु मासु कामहु, लीलालउ॥ २०.१०॥

एवं दश॥ २०.१०॥

तथा समेऽष्टावोजे नव चन्द्रहासः। यथा—

[5]"रेहइ तुह कँरि, चंदहासउ।
नं रिउसिरिए, केसपासँउ॥ २०.११॥




समेऽष्टावोजे दश गोरोचना। यथा—

[6]"गोरोअणगोरी, तुहँ कओलुँ।
पटिमाइ चुंबइ, ससहरु लोलु॥ २०.१२॥

समेऽष्टावोजे एकादश कुसुमबाणः। यथा—

1) ससिणा रयणीए इत्यत्र शशिना रजन्या रतिभरे क्रीडासमये उल्लालिताः किङ्किणिका घुर्घुरिकाः। न खलु इमाः उडुमालाः नक्षत्रमालाः। 2) गोरडीत्यत्र परं केवलं कुङ्कुमलतया तरा गौर्यः उपमीयन्ते यदि किल भवति सा पुष्पिता फलिता सती अत्यद्भुता। तस्या यमेद्वयं कविमनेन वर्ण्यते इति। 3) लंघइ सायर इत्यत्र हे राजन् तव कीर्तिगङ्गा अपूर्वा वर्तते। यतः सागरं लङ्घते गिरिनारोहति। कीदृशी। शशि-शेखरहसितोज्ज्वला। अभङ्गा अक्षुटितेत्यर्थः। 4) जं सहि कोइलेत्यत्र हे सखि यत्कोकिला मधुरं व्याहरति यत्र [फुल्लितः] तिलकवृक्षः तन्मन्याध्वने कामस्य लीलालयः वसन्तमास- प्राप्त इत्यर्थः। 5) रेहइ तुह इत्यत्र तव करे चन्द्रहासः शोभते। इयोत्प्रेक्ष्यते। रिपुश्रियः केशपाशो वेणीदण्डः। 6) गोरोअणेत्यत्र हे गोरोचनागौरि तव कपोलं मलिनया प्रतिबिम्बेन चुम्बति शशधरश्चन्द्रः। कीदृशः। लोकबञ्चकः।

१ रयणीए॰ B. २ उल्लालिअ ABCDN; उल्लालिय P. ३ उडुमालिय P. ४ न N. ५ सायरु ALP. ६ नउरखी ABCDN. ७ तिलओ–लालओ N. ८ वसंत P. ९ किरि A. १० हासओ–पासओ N. ११ तुम्ह N. १२ कवउ B.
२६ छन्दो॰

[1]जसु लोहचक्किणे वि, न दलिउ झाणुँ।
वहिँ [2]वीरि किं करउ, सैं कुसुमबाणु ॥ २०.१३ ॥

समेऽष्टावोजे द्वादश मालतीकुसुमम्। यथा–

[3]मालईकुसुमु न लेइ, चंदणु चयइ।
तुह दंसणउम्माही, मग्गु जि निअइ ॥ २०.१४ ॥

समेऽष्टावोजे त्रयोदश नागकेसरः। यथा–

[4]दीसइ उववणि फुल्लिओ, नायकेसरो।
नं माहविण वणसिरिहि, दिण्णुँ सेहरो ॥ २०.१५ ॥

समेऽष्टावोजे चतुर्दश नवचम्पकमाला। यथा–

[5]तणु नवचंपयमाल जिण, करकम कमेल।
सहि तुहुं माहवलच्छि विण, परिमलबहुल ॥ २०.१६ ॥

समेऽष्टावोजे पञ्चदश विद्याधरः। यथा–

[6]मुहि करिवि मयँलंछणु गुलिअँ, गुलिआसिद्धि।
विज्जाहरिण जिम्व यम्महिण, जगु जिउ बुद्धि ॥ २०.१७ ॥

समेऽष्टावोजे षोडश कुब्जककुसुमम्। यथा–

[7]पेच्छंतहुँ नवमालइ ललिअ, परिमलअसम।
भमरहुँ किम्व मणु रंजहि णवँरि, कुज्जयँकुसुम ॥ २०.१८ ॥

समेऽष्टावोजे सप्तदश कुसुमास्तरणम्। यथा–

[8]मलयानिलु मलयजरसु ससहरु, कुसुमत्थरणु।
विरहानलजलिअहि तसु सव्वुँ वि, तणुसंतवणु ॥ २०.१९ ॥

एवं नव ॥ २०.१९ ॥

---

1) जसु लोहचक्किण वीत्यत्र यस्य भगवतः लोहचक्रेणापि सार्वभौमसुखेनापि ध्यानं न दलितं तस्मिन्वीरे किं करोति स कुसुमायुधः। अपि तु न किमपीत्यर्थः। 2) मालइकुसुमेत्यत्र हे सुभग तव दर्शनोत्कण्ठिता बाला मालतीकुसुमं न लाति न गृह्णाति। चन्दनं त्यजति। परं केवलं मार्गमेव [ पश्यति ]। 3) दीसइ उववणीत्यत्र दृश्यते उपवनं वनप्रदेशं लक्षीकृत्य पुष्पितो नागकेशरः। इवोत्प्रेक्षते। माधवेन वसन्तेन वनश्रियो दत्तः शेखरः 4) तणु नवचंपयेत्यत्र तनुः शरीरं नवचम्पकमाला येन कारणेन करकम(माः) कमलानि हे सखि तेन कारणेन माधवलक्ष्मीर्नैसन्ताश्रीः वर्तसे। कीदृशी। परिमलबहुला। 5) मुहि करिवीत्यत्र मुखे कृत्वा मृगलाञ्छनगुटिकां मन्मथेन बुद्ध्या जगज्जितम्। केनेव। गुटिकासिद्धेन विद्याधरेणेव 6) पेच्छंतहु इत्यत्र प्रेक्षमाणानां नवमालत्यां ललितां परिमलेनानन्यतुल्यां भ्रमराणां कथं मनो रञ्जयन्ति केवलं कुब्जककुसुमानि 7) मलयानिलेत्यत्र मलयानिलो मलयजरसः शशधरः कुसुमास्तरणं विरहानलज्वालितायास्तस्याः सर्वमप्येतत्तनुसतापनं भवति।

---

१ चक्किण वि S. २ दलिओ N. ३ ज्झाणु P. ४ वीरी S. ५ मु P. ६ कुसुम BDP. ७ दंसणु B. ८ दिनु P; दिण्ण ACN. ९ कम dropped in कमल ACDN. १० मयलंछण AB; मयलंछणु N. ११ गुलिआ S. १२ पेच्छं नहु N; पेच्छंताहु S; पेच्छंतह ABP. १३ मनरह ABP. १४ नवरि P. १५ खुज्जक० B; खुज्जयकुसुम P. १६ सव्व वि B; सवु वि AS.

तथा समे नव ओजे दश मधुकरीसंलापः। यथा—

[1]निसुणिअ माइंदइ, महुअरिसंलावु।
ओ पवसिअतरुणिहिं, पत्थुअउ पलावु॥ २०.२०॥

समे नव ओजे एकादश सुखावासः। यथा—

[2]जइ वम्मह गोरडी, भलइं निहालसि।
तुह सुहँआवासणी, ता किं जालसि॥ २०.२१॥

समे नव ओजे द्वादश कुङ्कुमलेखा। यथा—

[3]फेडवि कुंकुमलेह, रिउवहुवयणहं।
पंकलेह निम्मविअ, पइं महिसयणहं॥ २०.२२॥

समे नव ओजे त्रयोदश कुवलयदाम। यथा—

[4]जहिं घल्लइ उप्फुल्लिअ, घण चलनयणइं।
तहिं नवकुवलयदामइं, तक्खणि निवडइं॥ २०.२३॥

समे नव ओजे चतुर्दश कलहंसः। यथा—

[5]कामिणिहिअयसरोवरहं, तुंहुं जि कलहंसु।
प्रिये रूविण मयणहु किअउ, तइं जि परहंसु॥ २०.२४॥

समे नव ओजे पञ्चदश सन्ध्यावली। यथा—

[6]सिंदूरिअँ गुरुकुंभत्थल, गयघड तुहुं वलि।
अँगालि नराहिव उत्थरिअ, किरि संझावलि॥ २०.२५॥

समे नव ओजे षोडश कुञ्जरललिता। यथा—

[7]तोडिअगुडमुहवडसंनाह, छड्डिअसग्गयँ।
निंदहिं पहु कुंजरललिअगइ, तुह अरि भग्गयँ॥ २०.२६॥

1) निसुणिअ माइंद इत्यत्र श्रुत्वा माकन्दे मधुकरीसंलापं पश्य प्रोषितरमणीभिः प्रलापः रोदनं प्रस्तुतः प्रारब्धः। 2) जइ वम्महेत्यत्र यदि हे मन्मथ गौरीं भव्यां निभालयसि तदा तव सुखावासनीं किं ज्वालयसि। 3) फेडवि कुंकुमलेहेत्यत्र स्फेटयित्वा कुङ्कुमलेखां पत्रवल्लीं रिपुवधूवदनानां पङ्कलेखा निर्मिता त्वया वासाम्। कीदृशां महीशयनानाम् 4) जहिं घल्लइंत्यत्र यत्र क्षिपसि उत्फुल्ले प्रिया चलनयने तत्र नवकुवलयदामानि तत्क्षणं पतन्ति। श्यामकान्तिपातात् सर्वत्र श्यामीभवनादित्यर्थः 5) कामिणिहिमि(इ)त्यत्र कामिन्या हृदयसरोवरस्य त्वमेव राजहंसः। हे प्रिय त्वयैव मदनस्य पराभवः कृतः 6) सिंदूरिअ इत्यत्र हे नराधिप तव बले गजघटाः सन्ति। कीदृशाः(श्यः)। सिन्दूरितगुरुकुम्भस्थलाः। किलेति संभावनायाम्। अकाले सन्ध्यावलिरुल्लसिता। 7) तोडिअगुडेत्यत्र गुडा गजप्रक्षरा। मुखपटाः इत्थिदपादीनां मुखाभरणानि। निन्दन्ति हे प्रभो कुञ्जरललितगतिम्। भग्ना अरयो मुक्तखङ्गाः। पदयन्त इति शेषः।

१ मायंदइ BP. २ महुअरीसं॰ A. ३ उअ ABP; उ D. ४ तरुणि ति N. ५ पत्थुअओ N. ६ निहालिसि BP. ७ सुह॰ C. ८ ना कि N. ९ वहूवयणह D; वहुयणहु A. १० तुह जि A. ११ पियह॰ B. १२ ज B. १३ सिंदुरिअ N. १४ तुह A. १५ अकालि BP; अमगलि NS. १६ किरि D. १७ संझावलि N. १८ गुज्जु॰ N. १९ छड्डिअ N. २० सग्गया N; सग्गइ S. २१ भग्गया CDNS.

समे नव ओजे सप्तदश कुसुमावली। यथा—

[1]निच्छइं पिअसहि वम्महरायहु, आणु जुं भंजइ।
कुसुमावलिठिअछप्पयसद्दिहिं, तं महु वज्जइ ॥ २०.२७ ॥

एवमष्ट ॥ २० ॥ २७ ॥

तथा। समे दश ओजे एकादश विद्युल्लता। यथा—

[2]विज्जुलि मेहमज्झि, अंधारइ गोरी।
कवण स हत्थभल्लि, कुसुमाउह तोरी ॥ २०.२८ ॥

समे दश ओजे द्वादश पञ्चाननललिता। यथा—

[3]संतट्टहं मयगलहं, चिक्कारिहिं कलिअ।
रण्णाइं वि वज्जरहिं, पंचाणणललिअ ॥ २०.२९ ॥

समे दश ओजे त्रयोदश मरकतमाला। यथा—

[4]फुल्लंधुअधोरणीउ, लयावणगोच्छिहिं।
नवमरगयमालिआउ, नाइ महुलच्छिहिं ॥ २०.३० ॥

समे दश ओजे चतुर्दश अभिनववसन्तश्रीः। यथा—

[5]कर असोअदल मुहु कमलु, हसिउ नवमल्लिअ।
अहिणववसंतसिरि पइ, मोहणछइल्लिअ ॥ २०.३१ ॥

समे दश ओजे पञ्चदश मनोहरा। यथा—

[6]तुहं गुण अणुदिणु सुमरंतिहि, विरहकरालिअहि।
मयणमणोहर तणुअंगिहि, दय करि बालिअहि ॥ २०.३२ ॥

1) निच्छइ पिअसहि इत्यत्र निश्चयेन हे प्रियसखि मदनराजः आज्ञां यो भनक्ति षट्पदध्वनैस्तं मधुर्वसन्तः तर्जयति। 2) विज्जुल मेहेत्यत्र अन्धकारे मेघमध्ये गौरी विद्युद् दृश्यते। का साम्या। हे कुसुमायुध त्वदीया हस्तभल्ली। भल्लीव भल्ली विरहिणां दुःखजनकत्वात्। 3) संतट्टइमित्यत्र सत्रस्तानां मदकलानां चि(ची)त्कारैररण्यान्यपि किल निश्चयेन पञ्चाननललितानि कथयन्ति। 4) फुल्लधयधोरणीत्यत्र लतावनगुच्छेषु पुष्पंधयधोरणयो भान्ति। उत्प्रेक्षते। मधुलक्ष्म्याः मरकतमालाः। मरकतमरिष्टरत्नमित्यर्थः। 5) कर असोअ इत्यत्र करौ हस्तौ अशोकदलानि मुखं कमलं हसितं नवमल्लिका। अभिनववसन्तश्रीरेषा कामिनी। मोहने छेका निपुणा। 6) तुह गुण अणुदिणु इत्यत्र हे सुभग हे मदनमनोहर। तव गुणाननुदिनं स्मरन्तीषु विरहकरालितासु तन्वङ्गीषु दयां कुरु।

१ आण BDP. २ जुं N. ३ ट्ठिअ N. ४ लप्पय N. ५ सद्द B; सद्दिं AP. ६ विज्जुलय SN. ७ विक्कारिहिं NS. ८ कलिआ—ऊलिआ S. ९ रजाइं वि P. १० धोरणीय BP; धोरणीओ CD. ११ गुच्छिहिं ABP. १२ मालियाओ C १३ मुहुल॰ N. १४ ठइल्लिअ N. १५ मनोरमा A. १६ [illegible] A. १७ सनरंतिहि N १८ बालिअहिं BCD, बालिअहि D.

समे दश ओजे षोडश क्षिमिका। यथा—

[1]हिंडइ सा घण जाम्व गहिल्लि, विरहिण आखिची।
देक्खिवि वल्लहु ता आणंदी, जणु अमईण सित्ती ॥ २०.३३ ॥

समे दश ओजे सप्तदश किन्नरलीला। यथा—

[2]ओ भडकबंधु नच्चंतु समरि, असिपहा(ह)रतुट्टिर्ण।
किन्नरलील कलइ तुरयसिरिण, तक्खणचहुट्टिर्ण ॥ २०.३४ ॥
एवं सप्त ॥ २०.३४ ॥

तथा समे एकादश ओजे द्वादश मकरध्वजहासः। यथा—

[3]सो जलिअउ मयणग्गि, जु कुसुमिअउ पलासु।
जा पप्फुल्लिअ मल्ली, सु मयरद्धयहासु ॥ २०.३५ ॥

समे एकादश ओजे त्रयोदश कुसुमाकुलमधुकरः। यथा—

[4]पत्तउ एहु वसंतउ, कुसुमाउलमहुअरु।
माणिणि मेंणु मलंतउ, कुसुमाउहसहयरु ॥ २०.३६ ॥

समे एकादश ओजे चतुर्दश भ्रमरविलासः। यथा—

[5]अलि मालइपरिमललुद्धु, न अन्नहिं रइ करइ।
सा भमरविलासविअड्ढ, न अन्नहिं मणु धरइ ॥ २०.३७ ॥

समे एकादश ओजे पञ्चदश मदनविलासः। यथा—

[6]मयणविलासगिरिव्व सहेइ, मुद्धहि थणमंडलु।
तहिं रेहइ तरलहारलय, निज्झरु किर निम्मलु ॥ २०.३८ ॥

समे एकादश ओजे षोडश विद्याधरहासः यथा—

[7]नासंतिहिं समरागमसमइ, परिचत्तगंदिदिहिं।
विवि विज्जाहर हासिअ सयल, तुंह वेरिनरिंदिहिं ॥ २०.३९ ॥

1) हिंडइ सा धणेत्यत्र सा प्रिया यावद्विरहेण आश्लिष्टा सती महिला परिभ्रमति तावत् वल्लभं दृष्ट्वा आनन्दिता अमृतेन सिक्ता भवति 2) ओ भडकबंधु इत्यत्र पश्य भटकबन्धः समरे नृत्यन्। असिप्रहारत्रुटितेन कल्लोहितत्वात् तत्क्षणे चिलमेनाश्वशिरसा किन्नरलीलां कलयति। तुरुचन्दनत्वात्। 3) सो जलिअउ इत्यत्र पलाशः पुष्पितो तन्मदनाग्निः प्रज्वलितः। यच्च मल्लिका प्रोत्फुल्ला तन्मकरध्वजहासम्। 4) पत्तउ एहु इत्यत्र एष वसन्तः प्राप्तः। कीदृशः। कुसुमेषु आकुलाः मधुकराः यत्र। पुनः कीदृशः। कुसुमायुधसहचरः। अतः हे मानिनि मानेनालं कृतम्। तत्रेत्यध्याहारः। [ मानिनीमानं मर्दयन् P. ]। 5) अलि मालइ इत्यत्र अलिर्भ्रमरः मालतीपरिमललुब्धो नान्यत्र रतिं करोति। सापि मालती भ्रमरविलासविदग्धा नान्यत्र मनो दधाति। तस्मिन्नेव चित्त धरतीत्यर्थः। 6) मयणविलासेत्यत्र मदनविलासगिरिरिव शोभते मुग्धायाः स्तनमण्डलम्। तत्र राजते तरलहारलता निर्झरः किल निर्मलः। 7) नासंतिहिमित्यत्र नश्यद्भिः समरागमसमये परित्यक्तगजेन्द्रैर्दिवि विद्याधरा हासिताः सकला यत्र वैरिनरेन्द्रैः।

१ गहिल्लि N. २ अनयव D. ३ सित्ती N. ४ तट्टिण NS. ५ तक्खुनि A. ६ चहुट्टिन N. ७ जलिअओ NS. ८ मयणग्गी K. ९ कुसुमेउ A १० माण AC, माण C ११ मिलंतउ A. १२ उदउ D. K. १३ न अभिहं DN; ओ अवहं A. १४ विअइ N १५ सहइ P, महेइ N. १६ मुद्धहि A; मुद्धइं N. १७ धणमडलु N, थणमडलु D, धणमडलु B १८ हारल्लइ S १९ नासनाइं A. २० गयहिं DP. २१ तुहु CDN. २२ वेरनरिंदइं DP.

समे एकादश ओजे सप्तदश कुसुमायुधशेखरः। यथा—

[1]घोलिरनवपल्लु परिफुल्लिउं, रेहइ असोअतरु।
विरइउं रम्मुं नाइ महुमासिण, कुसुमाउहसेहरु ॥ २०.४० ॥

एवं षट् ॥ २०.४० ॥

तथा समे द्वादश ओजे त्रयोदश उपदोहकः। यथा—

[2]महु कतिण रणि मुक्कउ, एक्कु पहारु अमोहुं।
उअ दो हय हय चूरिउं, सदणु सारहि जोहु ॥ २०.४१ ॥

समे द्वादश ओजे चतुर्दश दोहकः। यथा—

[3]पिअहु पहारिण इक्किण वि, सहि दो हया पडंति।
सन्नद्ध असवारभड़, अन्नुं तुरगु न भंति ॥ २०.४२ ॥

प्रायोग्रहणात्संस्कृतेऽपि। यथा—

[4]मम तावन्मतमेतदिह, किमपि यदस्ति तदस्तु।
रमणीभ्यो रमणीयतर, मन्यत्किमपि न वस्तु ॥ २० ४३ ॥

अत्र समपादान्ते गुरुद्वयमित्याम्नायः ॥ २०.४३ ॥

समे द्वादश ओजे पञ्चदश चन्द्रलेखिका। यथा—

[5]तुह विरहिं सा अइदुब्बली, धणें आवंडुरदेह।
अहिमयरकिरणिहिं विक्खिविअ, चंदलेह जिम्व एह ॥ २०.४४ ॥

समे द्वादश ओजे षोडश सुतालिङ्गनम्। यथा—

[6]तुह चाडिण भुअदण्डिण निवइ, धरमाणिण महिवलउं।
जलहिसुआलिंगणपहवंसुहु, देउ जणद्दणु कलउ ॥ २०.४५ ॥

---

1) घोलिरनवपल्लवेत्यत्र अशोकतरुः राजते। कीदृशः। घोलन्नवपल्लव। परि सामस्त्येन पुष्पित। इवोत्प्रेक्षते। मधुमासेन कुसुमायुधशेखरो विरचितो रम्य। 2) महु कतिणेत्यत्र हे सखि पश्य। मम कान्तेन रमणेन। रणे सङ्ग्रामे। एक अमोघ प्रहारो मुक्तो येन प्रहारेण द्वौ हयौ हयौ चूर्णित स्यन्दन सारथियोधश्च। 3) पिअहु पहारिणेत्यत्र हे सखि प्रियस्य प्रहारेण एकेनापि द्वौ हयौ पततः। सन्नद्ध अश्ववारभट अन्यस्तुरङ्ग। नात्र भ्रान्ति। 4) ममेत्यत्र मम तावदतन्मत अस्ति। अन्यदस्तु न वा। किम्। रमणीभ्यो रमणीयक किमपि वस्तु नास्तीति परिज्ञाथ। 5) तुह विरहे इत्यत्र तव विरहे सा प्रिया आपाण्डुरदेहातिदुर्बला। अहिमकर सूर्य तस्य किरणैर्विक्षिप्ता यथा चन्द्ररेखा पाण्डुरदेहा भवति। किं च एतद्वृत्त पूर्वमागतमस्तीति। 6) तुह चडिणेत्यत्र तव चण्डेन भुजदण्डेन हे नृपते धरमाणेन महीवलय जलधेः सुता लक्ष्मी तस्या आलिङ्गनप्रभव सुखं ददातु जनार्दन कल्याणु। मङ्गलमिति यावत्।

---

१ परिफुल्लिओ ए २ मिरइओ A, विरइओ ¹, ३ रम्मउ LP ४ मस्सओ ¹¹ ५ अनाइ N ६ चुरिओ A, चूरिओ N ७ दरुण वि A. ८ सनद्धओ ¹¹ ९ असवाहभड BEP, असवारभट्ठ CD १० अध A, ११ अत्र च स० F १२ यम ए १३ आवडरदेह A. १४ बउओ DV १५ पहु P १६ जणद्दण A

समे द्वादश ओज सप्तदश कङ्केल्लिलताभवनम् । यथा—

"[1]कंकेल्लिलयाभवणब्भंतरि[1], अलिरिंछोलिं[2] सहंति ।
नावइ[3] महुलच्छीविणिवेसिअ, कज्जलहत्थयपंति[4] ॥ २०.४६ ॥

एवं पञ्च ॥ २०.४६ ॥

तथा समे त्रयोदश ओजे चतुर्दश कुसुमितकेतकीहस्तः । यथा—

"[2]जगु नीसेसु वि निज्जिणिउ[5], निरु गव्विरु विसमत्थउ ।
उब्भइ[6] सरलदलंगुलिउ, कुसुमिअकेअइहत्थउ[7] ॥ २०.४७ ॥

समे त्रयोदश ओज पञ्चदश कुञ्जरविलसितम् । यथा—

"[3]सल्लइपल्लवकवलण्णु[8], रेवानइजलि मज्जणु[9] ।
वं कुंजरविलसिउ सुमरइ, गयविरहिउ करेणुगणु ॥ २०.४८ ॥

समे त्रयोदश ओजे षोडश राजहंसः । यथा—

"[4]जइ गंगाजलि धवलि फालइ, जउणाजलि जइ खित्तउ ।
रायहंसि न हु वड्ढु[10] न तुट्टु, सुब्भत्तणु[11] तु वि तेत्तउ ॥ २०.४९ ॥

समे त्रयोदश ओजे सप्तदश अशोकपल्लवच्छाया । यथा—

"[5]वयणु[12] सरोजु नयणे कुवलयदल, हासु[13] नवफुल्लिअमल्लि ।
करपाय असोअपल्लवच्छाय, सइ जि कुसुमाउहभल्लि ॥ २०.५० ॥

एवं चत्वारः ॥ २०.५० ॥

समे चतुर्दश ओजे पञ्चदश अनङ्गललिता । यथा—

"[6]पलिअ केस चलें[14] दसणावलि, जर जज्जरइ सरीरबलु ।
सव्विं[15] वि गलहिं[16] अणंगललिअ, किज्जउ धम्मु महंतफलु ॥ २०.५१ ॥

1 ) कंकेल्लिलयेत्यत्र कङ्केल्लिलताभवनाभ्यन्तरे भ्रमरश्रेणयो राजन्ते । इत्योत्प्रेक्षते । मधुलक्ष्म्या विनिवेशिताः कज्जलहस्तपङ्क्तयः । 2 ) जगु नीसेसु इत्यत्र जगन्निःशेषमपि निर्जित्य निश्चितं सगर्वो विषमास्त्रः कामः उद्भ्राति सरलदलाङ्गुलीः कुसुमितकेतकीहस्तम् । 3 सल्लइपल्लवेत्यत्र करेणुगणः हस्तिनीसमूहः गजेन विरहितः सन् सल्लकीपल्लवकवलार्पणं रेवानदीजले मज्जनं च स्मरति । 4 ) जइ गंगेत्यत्र यदि च धवले गङ्गाजले यदि च कृष्णे यमुनाजले राजहंसः प्रक्षिप्तः तथापि तस्य शुभ्रत्वं न वर्धितं न च त्रुटितम् । 5 ) वयणु सरोजु इत्यत्र वदनं सरोजं नयनं कुवलयदलं हास्यं पुष्पितनवमल्लिका करपादौ अशोकपल्लवच्छायौ । इत्योत्प्रेक्षते । स्वयमेव कुसुमायुधस्य भल्लिका । भल्ली शस्त्रविशेषः । 6 ) पलिअ केस इत्यत्र केशाः पलिताः । चला दशनावलिः । जरया जर्जरितं शरीरबलम् । सर्वाण्यपि गलन्ति । अनंगललिआई [ललिआई] इति-ललितानि । अतएव महाफलं धर्मं कुरुत भव्याः ।

१ भवणब्भितरि A. २ रिंछोलि K. ३ णवइ N. ४ तथयपंति K. ५ निज्जिणिउ AC. ६ उब्भइ B. ७ हत्थओ C. ८ कवल० A. ९ णिज्जओ NS. १० वुड्ढु N. ११ सुब्भत्तणु DN. १२ वयण D. १३ सव्वु S. १४ दंत B. १५ चलिय द० A. १६ सव्व वि C. १७ गलिहिं ACDNS.

समे चतुर्दश ओजे षोडश मन्मथविलसितम्। यथा–

[1]मयवस तरुणिविलोअणतरलु, कलेवरु संपइ जीविउ।
मेल्लहु रमणीअणि सहुं संगु, चयहु हयवम्महविलसिउ॥ २०.५२॥

समे चतुर्दश ओजे सप्तदश ओहुल्लणकम्। यथा–

[2]महुरसु घुंटिउ जेहिं जहिच्छइ, ते अलि दीसंर्वे भमंत।
मालइओहुल्लणउं करंतिण, किं साहिउं पइं हेमंत॥ २०.५३॥

[3]वारङ्कडीत्यन्ये। एवं त्रयः॥२०,५३॥

समे पञ्चदश ओजे षोडश कज्जललेखा। यथा–

[4]कज्जललेहाविल्लोअणइं, गलिअंसुजलिण पम्हुट्ठउ।
अहराल्तयरसु सामरिसु, तुह रिउवहुनयणि पइट्ठउ॥ २०.५४॥

समे पञ्चदश ओजे सप्तदश किलिकिञ्चितम्। यथा–

[5]तरुणीकिलिकिंचिअइं विसट्टहिं, ससिजोण्हसमुज्जल रत्तडी।
मल्लिअफुल्लइं परिमलसारइं, जउ तउ गय सग्गहु वत्तडी॥ २०.५५॥

एवं द्वे॥ २०,५५॥

समे षोडश ओजे सप्तदश शशिबिम्बितम्। यथा–

[6]तुह मुहुं लायण्णतरंगिणीए, झलकंतउ कंतिकरंविअउ।
सोहइ निम्मलवट्टुलमंडलु, जलमज्झि नाइ ससि बिंबिअउ॥ २०.५६॥

अत्रैकः। एवं तावद्वा पञ्चपञ्चाशद्भेदा चतुष्पदी। उभये दशोत्तरशतमन्तरसमाः चतुष्पद्यो वस्तुकानि वा॥

1) मयवसेत्यत्र मदवशतरुणीविलोचनवत् तरलं कलेवरं संपद् जीवितं च। मुच्यतां रमणीजनेन सङ्गः। त्यजत हतमन्मथस्य विलसितम्। 2) महुरसु इत्यत्र हे हेमन्त त्वया मालत्याः। ओहुल्लणउं इति– निर्दीप्तित्वं पुष्पादिहीनत्वमिति यावत्। कुर्वता किं साधितम्। यस्मात् यैर्भ्रमरैर्यदृच्छया मधुरसः घुटितः आस्वादितः ते भ्रमराः सांप्रतं पुष्पाभावात् भ्रमन्तः दृश्यन्ते। मधोरनुपलम्भात्। 3) वारङ्कडीति पिङ्गलमते। 4) कज्जललेहेत्यत्र कज्जलरेखाविलत्वं विलोचनानां गलिताश्रुजलेन प्रमृष्टं निरस्तम्। अधरालक्तकरसः सामर्षः सन् तव रिपुवधूनयने प्रविष्टः। रिपुवधूनयनान्यारक्तानि जातानि इति भावः। 5) तरुणीकिलीत्यत्र स्मितहसितभयरोषगर्वदुःखश्रमाभिलाषसंकरः किलिकिंचितम्। तरुणीकिलिकिंचितानि विसर्पन्ति। शशिज्योत्स्नासमुज्ज्वला रात्रिः। मल्लिकापुष्पाणि परिमलसाराणि। यदि तदा स्वर्गस्य गता वार्ता। स्वर्गाभिधानं न कोपि गृह्णाति इति भावः। 6) तुह मुहेत्यत्र तव लावण्यतरङ्गिण्यां दीप्यमानं कान्तिकराम्बितं शोभते मुखम्। इवोत्प्रेक्षते। निर्मल[वर्तुल]मण्डलो जलमध्ये शशी बिम्बितः।

१ मइवस D. २ मेल्लहु P. ३ सहुं ABP. ४ दीसति BP. ५ पम्हुट्ठओ N. ६ पइट्ठओ N. ७ जोन्ह A. ८ सग्गह P; मग्गहु N. ९ तुहु ABCDSP. १० मुह AEK. ११ ल्लयण ABCDNPS. १२ करंविअओ AC. १३ निम्मलु A. १४ बिंबिओ A; बिंबिअओ N. १५ प P.

## अन्तरसमा एव द्वितीयतृतीयांह्रिव्यत्ययेऽर्धसमाः ॥ २१ ॥

द्वितीयतृतीयपादयोर्विपर्यये सत्यन्तरसमा एव दशोत्तरशतसंख्या अर्धसमासंज्ञाः। एवग्रहणं सर्वसाम्यार्थम्। तेनासामपि तान्येव चम्पककुसुमादीनि नामानि भवन्ति। तत्रौजे सप्त समेऽष्टेत्यन्तरसमा-चम्पककुसुमम्। तदेव द्वितीयतृतीयांह्रिविपर्ययेऽर्धसमा-चम्पककुसुमम्। यथा—

[1]गोरी गोट्ठि, दरफुरिउट्ठि।
कलहंसीगइ-, कलहे लग्गइ ॥ २१.१ ॥

[2]मुखपङ्क्तिरर्धसमा यथा—

[3]कृपकर्णकलिंग परज्जिआ, ठिअ नरवइ माणविवज्जि[अ]आ।
न हु कोइ अभिट्टइ अणिअवहि, कहिं वइरि जयद्दहु कण्ह कहि ॥ २१.२ ॥

इत्यादि।

## द्वित्रिचतुर्भिर्लक्षणैर्मिश्रा सङ्कीर्णा ॥ २२ ॥

द्वाभ्यां ध्रुवाया अंह्रिलक्षणाभ्यां त्रिभिः चतुर्भिर्वा एकत्र मिश्रा संकीर्णा नाम चतुष्पदी। तत्र द्वाभ्यां सङ्कीर्णा। यथा—

[4]चूडल्लउ वाहोद्दजलु, नयणा कंचुअ वि समथेण।
इअ मुंजें दइआ दूहडा, पंच वि कामहु पंचसॅर ॥ २२.१ ॥

त्रिभिर्यथा—

[5]यायाला फरुसा विंधणा, गुणिहिं विमुक्का प्राणहर।
जइ दुज्जण सज्जणंजणपउरि, तेम्व पसरु न लहंति सर ॥ २२.२ ॥

यथा वा—

[1]चूडल्लउ चुण्णी होइसइ, मुद्धिकओलि निहित्तउ।
निर्देड्ढउ सासाणलिण, वाहसलिलसंसित्तउ ॥ २२.३ ॥

---

1) गोरी गोट्ठि इत्यत्र गौरी कर्त्री गोष्ठ्यां दरस्फुरितो ईषत्स्फुरितो ओष्ठो यस्याः सा गोष्ठीदरस्फुरितोष्ठी। कलहंसैः सह यो गतिकलहस्तत्र लगति। गतौ कलहंसैः सह स्पर्धां विधत्ते इत्यर्थः। 2) मुखपङ्क्तिरर्धसमेत्यत्र ओजे पञ्चदश समे षोडश पूर्वलक्षणं मुखपङ्क्तिर्नाम छन्दस्त्रिंशदाशतमम्। 3) कृपकर्णेत्यत्र कृपो द्रोणाचार्यः कर्णश्चाम्पाधिपतिश्चैते पराजिताः स्थिताः। न च कोऽपि युध्यतेऽनीकपथे सैन्यमार्गे। कुत्र वैरी जयद्रथनामा इति कथय कृष्ण इति पाण्डवाः पृच्छन्ति। 4) चूडल्लउ इत्यत्र चूडकेति प्रसिद्धः, बाष्पौघजलं, नयनानि, कञ्चुकः, समस्तानी, एतेषां पञ्चानां अपि दूहकाः मुञ्जेन राज्ञा रचिताः सन्ति। ते पञ्चापि कामशराः। 5) यायाला फरुसेत्यत्र यथा दुर्जनाः सज्जनप्रचुरे स्थाने प्रसरं लभन्ते न तथा शराः। दुर्जनाश्च किंभूताः। वाचालाः परुषाः कठोरा मर्माविधः वेधिनः गुणैरौदार्यादिभिर्विमुक्ताः। पक्षे शराः कीदृशाः। पापरताः परुषाः वेधकाः गुणैः प्रत्यञ्चादिभिर्विमुक्ताः। 1) चूडुल्लओ इत्यत्र चूडकश्चूर्णः भविष्यति मुग्धे कपोले निहितः मम निर्दग्धः श्वासानलेन वाष्पसलिलेन सिक्तः।

---

१ तृतीयांह्रिव्यत्यये अन्तर॰ B. २ कय P. ३ परिराजिआ A. ४ सनति BP. ५ जइद्दहु P; जयद्दु N. ६ कन्ह A. ७ चूडलउ A. ८ कंचुवि ACDN; कचुवि B. ९ दनपन ABEN. १० पंचसढ A. ११ दजनपउरि A. १२ चुडुल्लओ CDESN. १३ निद्दड्ढउ CDN. १४ सासानिलेण CDN. १५ छन्दो॰

चतुर्भिर्यथा–

[1]तं तेत्तिउ वाहोहजलु, सिहिणंतरि वि न पत्तु।
छिमिछिमिवि[3] गंडत्थलिहिं, सिमिसिमिवि[5] सिमिवि समत्तु॥ २२.४॥

समैः पादैः सर्वसमा॥ २३॥

तुल्यकलैश्चतुर्भिः पादैः सर्वसमा चतुष्पदी॥ २३॥

तद्विशेषानाह–

पचौ ध्रुवकम्॥ २४॥

पञ्चमात्रचतुर्मात्रौ गणौ यस्य पादे तद् ध्रुवकम्। यथा–

[2]जइ वि संखु न करि, तुं[7] ध्रुवु मुणिउ हरि।
जं विरहमीअइ, अणुसरिउ सिरिअइ॥ २४.१॥

चौ दः शशाङ्कवदना॥ २५॥

द्वौ चतुर्मात्रौ द्विमात्रश्चैकः शशाङ्कवदना। यथा–

[3]नवकुवलयनयण, ससंकवयण धण।
कोमलकमलकर, उअ सरयसिरि किर॥ २५.१॥

चपदाश्चातौ वा मारकृतिः॥ २६॥

चतुर्मात्रपञ्चमात्रद्विमात्राः चतुर्मात्रद्वयत्रिमात्रौ वा मारकृतिः। यथा–

[4]तुह मार मारकिदी, क वि एहं नवल्लिअ।
[11]दूरि स वालेंभल्लि, जं हिअँडइ सल्लिअ॥ २६.१॥

पचदाश्चिर्वा महानुभावा॥ २७॥

षण्मात्रचतुर्मात्रद्विमात्रा वा चगणत्रयं वा यत्र सा महानुभावा। यथा–

1) तं तेत्तिउ वाहोहेत्यत्र तत्तावद्वाष्पौघजलं स्तनान्तरे न प्राप्तम्। तत्सलोहाद्युपरि यदि जलबिन्दुः पतति तदा प्रथमं छमिछमिदाब्दं करोति पश्चात्समिसमीति कृत्वा शुष्यति। कपोलावपि विरहानलेन तप्तौ स्तोऽतस्तत्र समाप्तम्। इत्येवौ द्वावपि दोहकौ 'घूडलउ' 'वाहोहजलसिर्पा' प्रभृतिवती।
2) जइ वि संखु नेत्यत्र हे राजन् यद्यपि शङ्खो न धृतः करे तथापि त्वं ध्रुवं निश्चितं ज्ञातो हरिर्विष्णुः। यद्विरहे भीतया श्रिया अनुसृतः आश्रितः। 3) नवकुवलयेत्यत्र नवकुवलयनयना शशाङ्कवदना प्रिया कोमलकमलकरा पश्य शरदर्धाः शरल्लक्ष्मीः। किरेति–संभावनायाम्। 4) तुह मारेत्यत्र हे मार काम तव एषा नूतना कापि मारकृतिः। अपूर्वः कोऽप्ययं मारः इत्यर्थः। सा बाला एव भल्लिर्दूरे यद्यस्मात् कारणात् हृदये शल्यिता। धन्या भल्ली दूरस्था सती न शल्यकारिणीत्यपूर्वम्।

१ विंत्तिउ B. २ सिहिणं नरिवि. ३ छिमिवि छिमिवि B. ४ गंडत्थलहिं CDNS. ५ सिमिसिमि सिमिवि समतु EP. ६ यत्र A. ७ तु NS. ८ द्वौ चतुर्मात्रथैकः A. ९ कमल dropped in A. १० एवहनवडी अ A. ११ दूर A. १२ सवाभलि N; सवल्लिमलि B. १३ हिअइड CD.

[1]जे नि[१]अहि न परदोस, गुणिहिं जि पयडि[२]अतोस ।
ते जगि महाणुभा[३]वा, विरला सरलसहावा ॥ २७ १ ॥

**पचताश्चापौ पातौ वाप्सरोविलसितम् ॥ २८ ॥**

षण्मात्रचतुर्मात्रत्रिमात्रा वा चतुर्मात्रद्वयपञ्चमात्रौ वा पञ्चमात्रद्वयत्रिमात्रौ वा यत्र तदप्सरोविलसितम् । यथा –

[2]पइ ससिवय[४]णिए विब्भमि, हसि[५]अ अच्छरविलसिअइं ।
भुमई[६]हिं किउ[७] पाइक्कउ, मयणु मोहि[८]अजणमणइ ॥ २८ १ ॥

**पचचाश्चिदौ वा गन्धोदकधारा ॥ २९ ॥**

षण्मात्रश्चतुर्मात्रद्वयं यदि वा चतुर्मात्रत्रयं द्विमात्रश्च सा गन्धोदकधारा । यथा –

[3]रमणिकवोलकुरंगमय-, पत्तलयाविलअसुभवि ।
घणगंधोदयधारभरि, वइरिअ तुह ण्हायति सवि ॥ २९ १ ॥

**चितौ पचपा वा पारणकम् ॥ ३० ॥**

चतुर्मात्रत्रयं त्रिमात्रश्च यदि वा षण्मात्रचतुर्मात्रपञ्चमात्राः पारणकम् । यथा –

[4]कइअहिं[९] होएसइ[१०] त दिवसु, आणंदसुहारसपावणउ[११] ।
होही प्रियमुहससिचंदि[१२]मइ, जहिं नयणचउ(ओ)रह[१३] पारणउं[१४] ॥ ३० १ ॥

**चीः पद्धडिका ॥ ३१ ॥**

च[१५]गणचतुष्कं पद्धडिका । यथा –

[5]परगुणगहणु सदोसपयासणु, म[१६]हुमहुरक्खरहिअमिअभासणु ।
उवयारिण [१७]पडिकिउ वेरि[१८]अणह, इअ पद्ध[१९]डी मणोहर सुअणह ॥ ३१ १ ॥

1) जे निअहिं नेत्यत्र ये सत्पुरुषा परदोषान् न पश्यन्ति किं तु गुणैरेव प्रकटिततोषा ॥ एव जगति महानुभावाः । विरला स्तोका । कीदृशा । सरलस्वभावा । 2) पइ ससिवयणिए इत्यत्र त्वया शशिवदनिके विभ्रमेण विलासेन हसितानि अप्सरोविलसितानि । भ्रुवा इत्योऽल्पपदातिर्मदन काम । किंविशिष्टया भ्रुवा । मोहितजगन्मनसा । 3) रमणिकवोलेत्यत्र रमणीकपोलेषु या कुङ्कुममदपत्रलता कस्तूरीपत्रवल्लयस्ताभिराविलानि श्यामीकृतानि यान्यश्रूणि तेभ्यो भव उ पयस्तस्मिन् ग धोदकधाराभरे वैरिणस्तव स्नान्ति स्नान कुर्वन्ति सर्वे । 4) कइअत्ति – कदा भविष्यति स दिवस । आनन्दसुधारसप्रापण आनन्दसुधारसपावन पवित्रो वा भविष्यति प्रियमुखशशिचन्द्रिकाया यत्र ननयनचकोरयो पारणकम् । 5) परगुणेत्यत्र परेषां गुणानां ग्रहण स्वकीय दोषप्रकाशन च । मधुरमधुराक्षराणि यत्र । एवंविधं हितं मितं भाषणं च । उपकारेण प्रतीकारो वैरिजनानाम् । वैरिणामप्युपकारकरणमित्यर्थ । एषा पद्धतिर्मार्गो मनोहरा सुजनानाम् । अन्योऽपि हि वैरिणो द्रोहेण प्रतीकार करोति सुजनस्तूपकारेणेत्यर्थ ।

१ निअहि A २ पयडिअतोस A ३ भाव सहाव BFP ४ ससिवयणिइ BP रासिवयणीए A ससिवयणिविब्भमि [illegible] ५ असिअ N ६ भुमयहिं S ७ कउ A ८ मोहिउज० A ९ कइअहि C १० होइसइ BP ११ पावणउ ACN १२ चंदिमइ A १३ नयणिचउरह BP नयणचउरह ACDN १४ पारणओ CNS १५ चचतुष्टय E १६ महु dropped in A महुमहुरक्खरअमियभा० B १७ पडिकिओ N, पडिकउ [illegible] १८ वेरिणह E १९ पद्धडिय BP

अत्रादिर्यादौ दीर्घान्ते प्राकृतदृष्टौ(३.७३) इह तु विशेष इति विशेषः ॥ ३१.१ ॥

षिपौ पगाला वा रगडाध्रुवकम् ॥ ३२ ॥

षगणत्रयं पगणश्च यदि वा षण्मात्रश्चतुर्मात्रद्वयं त्रिमात्रश्च यत्र पादे तद्रगडाध्रुवकम् । यथा—

"अइचंगाइं मोरइं वल्लहि, जइ तुम्हइं रूपमडप्फर भग्गय ।
काइं न एम्वहिं बहु विरहक्खणि, महु वम्मह रगडउं ध्रुवु लग्गय ॥ ३२.१ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ
षट्पदीचतुष्पदीशासनः षष्ठोऽध्यायः समाप्तः ॥ ६ ॥
ग्रन्थाग्रं ३२२; उभयं २६०६ ।

* *
*

1) अइचंगेत्यत्र अतिचङ्गाङ्गेन मदीयेन वल्लभेन यदि तव रूपाहंकारो भग्नः किं तत् एवमेव तस्य विरहक्षणे मन्मथ रगडा ध्रुवं लग्ना । रगडं विगोपनम् । यदि मम वल्लभेन काम त्वं पराभूतस्तर्हि मां किं विगोपयसीत्यर्थः ।

इति छन्दोऽनुशासने षष्ठाध्यायविषमपदविवरणम् ॥

१ तुह A. २ महु A. ३ रगडा ध्रुउ BP; रगडा धुवु ABK.

# अथ सप्तमोऽध्यायः ।

## द्विपदी ॥ १ ॥

इतः परं द्विपद्योऽधिक्रियन्ते ॥ १ ॥

दाचदालदाचदालि कर्पूरो पैः ॥ २ ॥

द्वौ द्विमात्रौ चतुर्मात्रो द्वौ द्विमात्रौ लघुद्वौ द्विमात्रौ चतुर्मात्रो द्वौ द्विमात्रौ लघुत्रयं च कर्पूरः । पैरिति पञ्चदशभिर्मात्राभिर्यतिः । च इति सिद्धे दगणद्वयनिर्देशो जगणनिरासार्थः । यथा –

कप्पूलधवलगुण अज्जिणिअ, आजम्मु वि नियचक्कवइ पइं ।
कित्ति काइं उल्लालिकरि, घल्लिअ चउसायर परइ ॥ २.१ ॥

सोऽन्त्यलोनः कुङ्कुमः ॥ ३ ॥

स एव कर्पूरः अन्त्येलघुना ऊनः कुङ्कुमः । यथा –

"घणसारु मेल्लि कुंकुमु चयहि, परइ करहि मयनाहि वि ।
विणु पिअयमिं इहु सउं निप्फलउं, मणु रइ करइ न कत्थ वि ॥ ३.१ ॥

एतावुल्लालकौ मागधानाम् ॥ ३.१ ॥

केचिल्लघ्वष्टकादारम्य लघुद्वयद्वयवृद्ध्या "वाहादीन् भेदानाहुः । यथाह –

वाहो वेहो चग्गो वंधू वाणो वओ वरो वेसो ।
वेणू वंणो वरिट्ठो विवुहो वलिंओ वेलो विहओ ३.२ ॥
वामो वुहो विसोलो विंरो विहुरो विहू वसू विरहो ।
विलओ तहा य विसेंओ उल्लाला पंचविसत्ति ॥ ३.३ ॥
अट्ठलहुविरइआओ पढमा उल्लालयाउ छंदम्मि ।
लहुएहिं दोहिं दोहिं अ हुंति इमे वड्ढमाणेहिं ॥ ३.४ ॥

एते च कोटीसंख्यप्रस्तारान्तर्भूता इति पृथक् नोक्ताः ॥ ३.४ ॥

---

1) कप्पूरधवलेत्यत्र कर्पूरधवलान्गुणान् अर्जयित्वा (-धवलगुणा अर्जिता P.) आजन्मापि नृपचक्रपते त्वया कीर्तिः कस्मादुल्लालयित्वा क्षिप्ता चतुःसागरेभ्यः परतः। 2) घणसारेत्यत्र घनसारं कर्पूरं मुञ्च। कुङ्कुमं त्यज। परतः मृगनाभिमपि कुरु। तेन विना प्रियतमेन भर्त्रा इह सर्वं निष्फलं निःसारम्। मनो रतिं क्वापि न संधत्ते। 3) वाहादीन् भेदानित्यत्र यस्मिन् अष्टौ लघवो भवन्ति स प्रथमो वाहः। द्वाभ्यां वृद्ध इत्यादि द्विकवृद्ध्या द्रष्टव्यमिति।

---

१ दद्वयनिर्देशो जनिरासार्थः F. २ कप्पूर॰ ABKP. ३ पल्लिअ S; घत्तिअ D; पत्तिअ N. ४ अन्त्येन लघुना DP. The whole sentence repeated in D. ५ पिअयमिं दुअ सउ CDN; पिअमे इहु सउं K; पिअयमें इहु सउ BP; पिअयमिं दुअ सहु A. ६ निप्फलओ N. ७ करियवि A. ८ वोहा DN. ९ गओ AS. १० वण्णो विरहो F. ११ वलिओ D; वलिय N. १२ वरो BP. १३ विलासो F. १४ विसरओ N. १५ अन्तर्भूतत्वादिति A. १६ पृथक् is dropped in F.

चृ लयः ॥ ४ ॥

चृ इति लुप्तविभक्तिको निर्देशः। सप्त चगणा लयो नाम द्विपदी। यथा—

"किउ उँरि लच्छिहिँ निलउ करिण कलिउँ चक्कु महिअलु धरिउ।
वलिनाम्बु सहिउ न हु कहँ वि हु पहु तुहुं पुरिसोत्तिमँचरिउ ॥ ४.१ ॥

स भ्रमरपदं ञजैः ॥ ५ ॥

स लयः ञजैर्दशभिरष्टभिश्च कलाभिर्यतिश्चेत्तदा भ्रमरपदम्। यथा—

"ललिअविलासोचिअ तविण किलेसहि सहि किं तणु अप्पणु।
मालइकुसुमु सहइ भमरपँउ न उण खरसउणिअडप्पणु ॥ ५.१ ॥

पचुदा उपात् ॥ ६ ॥

एकः पण्मात्रः पञ्च चतुर्मात्राः द्विमात्रश्चैको यदि तदा उपात्परं भ्रमरपदमुपभ्रमरपदमित्यर्थः। ञजैरिति वर्त्तते। यथा—

"तहि मुद्धहि नेहंधहि किम्व कियणेय तुँहं खलिउ पयट्टु।
उअँ भमरपएण वि भज्जइ मालइनवकुसुमु विसट्टु ॥ ६.१ ॥

चूपौ गरुडपदम् ॥ ७ ॥

पद् चगणाः पगणश्चैको गरुडपदम्। यथा—

"जसु पौरु लहंति कया वि न वि सुरगुरुभिउनंदणपमुह।
अरिपन्नगगरुड पयंपिअइ सयलु वि गुणगणु सु किम्व तुँह ॥ ७.१ ॥

पचुता उपात् ॥ ८ ॥

एकः पण्मात्रः पञ्च चतुर्मात्राः एकस्त्रिमात्रो यदि स्यात्तदोपात्परं गरुडपदम्। उपगरुडपदमित्यर्थः। यथा—

1) किउ उरि इत्यत्र कृतः उरसि लक्ष्म्या निलय। करेण कलितं चक्रम्। देहः महीतलं धृतम्। बलिनो राज्ञो नाम न सोढं कथमपि। हे पुरुषोत्तमचरितोऽसि। तस्यास्पुरसि धीर्निलयं करोति। सोऽपि करे चक्रं कलयति। महीतलं धरति। बलेर्दानवस्य नाम न सहते। 2) ललितेत्यत्र ललितविलासोचिता तपसा क्लेशयसि हे सखि किं तनुमात्मनः। मालतीकुसुमं भ्रमरपदं सहते। न पुनः खरशकुनिस्पर्शनम्। 3) तहीत्यत्र तस्या मुग्धायाः स्नेहान्धायाः कथं कृपण। लक्षणया हे अज्ञान। तव स्वलितं प्रवृत्तम्। कुत इत्याह—पश्य भ्रमरपदेनापि भज्यते मालतीकुसुमं विकसितम्। 4) जसु पार इत्यत्र यस्य गुणगणस्य पारं न लभन्ते कदापि सुरगुरुभृगुनन्दनप्रमुखाः हे अरिपन्नगगरुड स तव सकलोऽपि गुणगणः कथं प्रकाश्यते। अपि तु न प्रकाश्यते इत्यर्थः।

१ उवरि D. २ कलिय B; कलिउं A. ३ वलिनालिनाम्बु D; वलेनाउं BP. ४ कहि P. ५ पुरिसोत्तम॰ A. ६ तुम्ह A. ७ भमरपओ CNS, भमरपउं BE. ८ किंव ABP; किम D. ९ किविणय S. १० तुहुं P. ११ ओ B. १२ पार A. १३ तुट्ट S.

हणिअदुजीहप्पसरणु पिअपुरिसोत्तमु विणयाणंदणु।
"उअ गरुडपयम्मि निबद्धरइ नरवइ हरइ न कासु मणु॥ ८.१॥

चूदौ हरिणीकुलं ठजैः॥ ९॥

चतुर्मात्रसप्तकं द्विमात्रश्चैकः ठजैरिति द्वादशभिरष्टाभिश्च यतिश्चेत्तदा हरिणीकुलम्। यथा—

"तुहुं उज्जाणि म वच्चसु जइ वि हु विलसइ मयणूसवु पवलु।
गईनयणिहिँ लज्जीहइ तुहु हंसीउलु सहि तह हरिणिउंलु॥ ९.१॥

तद्गीतिसमं नजैः॥ १०॥

तद्धरिणीकुलं नजैरिति दशभिरष्टाभिश्च यतिश्चेत्तदा गीत्या समत्वाद् गीतिसमम्। यथा—

"नचिरु किसलकरिहिँ फुडपयडिअपुलउग्गमु मउलावलिहिँ।
उववणु नाइ मुइंउ कयगीइ" समं चिअ तरलिहिँ" अलिउलिहिँ॥ १०.१॥

पुर्भ्रमररुतम्॥ ११॥

नजरिति वर्तते। पश्च षण्मात्राश्चेद् भ्रमररुतम्। यथा—
"वरजाइ सरंतहु भमँरु रुअंतहु तुहु चिरु सुहु परिदीसइ।
मायंगि मयंधँइ तुज्झु रमंतहु कण्णचवेड जि होसइ॥ ११.१॥

पश्चूर्हरिणीपदम्॥ १२॥

एकः षण्मात्रश्चतुर्मात्रपद्कं हरिणीपदम्। यथा—

---

1) उअ गरुडेत्यत्र हतं द्विजिह्वानां दुर्जनानां प्रसरणं येन। पक्षे द्विजिह्वाः सर्पाः। प्रियाः पुरुषोत्तमाः सन्तो यस्य। पक्षे पुरुषोत्तमो नारायणः। विनयेन विनतानां प्रणतानां वा आनन्दनः। पक्षे विनतायाः आनन्दनः पुत्रश्च। उअ पश्य। नरपतिः कस्य मनो न हरति। गरुडपदे गरुडव्यापारे निबद्धरतिः। 2) च इत्यत्र सप्तमस्वराङ्कितत्वात् चगणानां सप्तकं ग्राह्यम्। 3) तुहुं उज्जाणेत्यत्र त्वमुद्याने मा व्रज। यद्यपि विलसति मदनोत्सवः प्रबलः। गतिनयनाभ्यां लज्जिष्यति हंसीकुलं हे सखि तथा हरिणीकुलं च। गत्या हंसीकुलं नयनाभ्यां हरिणीकुलं च लज्जिष्यतीति भावः। 4) नचिरेत्यत्र उत्प्रेक्षते। उपवनं मुदितमिव दृश्यते। कथंभूतम्। किसलयकरैर्नृत्यदिव। कुड्मलावलिभिः कुड्मलश्रेणीभिः स्फुटप्रकटितकुसुमपुलकोद्गममिव। तथा सममेव समकालमेव तरलैरलिकुलैः कृतगीति कृतगानमित्यर्थः। 5) वरजाईत्यत्र हे भ्रमर तव वरजातिकुसुमे स्मरतः शब्दं कुर्वतश्चिरं सुखं परिदृश्यते। मातङ्गे मदान्धे तत्र रममाणस्य कर्णचपेटैव भविष्यति। अन्योऽपि यो वरजातिं कुलीनपुरुषं सेवते स सुखी स्यात्। यस्तु मातङ्गे चण्डाले रमते स दुःखी स्यादित्यर्थः।

---

१ दुजीहपसरणु A. २ पुरिमोत्तम BE. ३ नेदणु AE. ४ कीसु S. ५ मयणूसव A. ६ गयनय॰ D. ७ हरिणीउलु AS; हरिउलु N. ८ पुलउग्गमु N. पुलउग्गम S. ९ ताइ N. १० मुइओ NS; मुइंओ A. ११ कयगाइं N. १२ तरलिअलिहिँ N. १३ भमर P. १४ मयंधइं S; मयंधिइं C. १५ तुज्झु ACN. १६ कण्णचवेडि ABP.

"एत्तहे गब्भभरालस हरिणी पउ न हु एक्को वि संचरइ।
एत्तहे कण्णारोविअसरु हयलुद्धउ भण मिउ किं करइ ॥ १२.१ ॥

पीचताः कमलाकरम् ॥ १३ ॥

षण्मात्रचतुष्कं चतुर्मात्रत्रिमात्रौ च कमलाकरम्। यथा–

"सयलु वि दिणु संनिहिअहं खेलंतहं चक्कवायमिहुणहं निअवि।
विरहदुत्थु मित्तत्थवणि नाइ दुक्खिअ मउलिहिं कमलायर वि ॥ १३.१ ॥

चृतौ कुङ्कुमतिलकावली ॥ १४ ॥

चतुर्मात्रसप्तकं त्रिमात्रश्च कुङ्कुमतिलकावली। यथा–

"महु दूसहविरहकरालिअहि मयण मेलसु जणु मणवंछिउ।
पइं पडिम ठवेविणु करिसु सामि कुंकुमतिलयावलिलंछिउ ॥ १४.१ ॥

ते रत्नकण्ठिके ठजैः ॥ १५ ॥

ते कमलाकरकुङ्कुमतिलकावल्यौ ठजैर्द्वादशभिरष्टाभिश्च यतिश्चेत्तदा रत्नकण्ठिके।
यथा–

"जइ न हससि न य कुप्पसि न रुवसि वा तुह सहइ रयणकंठिआ।
अन्नह फुरिआहरदरदीसंत नवरि सहइ दसणपंतिआ ॥ १५.१ ॥

"पडिहअबहुविहनरवइकुंजरसंघ परसाहिज्जविवज्जिउ।
महिअलि निरुवमविक्कमु तुहुं रायएरिस कंठीरवु निच्छिउ ॥ १५.२ ॥

पचुपाः शिखा ॥ १६ ॥

ठजैरित्यनुवर्तते। एकः षण्मात्रः पञ्च चतुर्मात्राः पञ्चमात्रश्च शिखा। यथा–

1) एत्ताहेत्यत्र इतो गर्भ(गर्भ)भरालसा हरिणी न एकमपि पदं संचरति। इतः कर्णारोपितशरो हयलुब्धको वर्तते। भण मृगः किं करोति। यदि हरिणीमपेक्षते तदा लुब्धकेन विनश्यते। यदि लुब्धकात् ग्रस्तो भवति तदा हरिणी विनश्यति। 2) सयलु वीत्यत्र सकलमपि दिने संनिहितानां सर्वापत्स्वापि सदा खेलतां चक्रमिथुनानां दृष्ट्वा विरहदौस्थ्यं मित्रस्य सूर्यस्यास्तमने दुःखिता इव मुकुलयन्ति कमलाकरा अपि। 3) महु इत्यत्र हे मदन मम मनोवाञ्छितं जन प्रियतमं मेलय दुःसहविरहकरालितायाः। हे स्वामिन् अहं त्वां प्रतिमायां स्थापयित्वा कुङ्कुमतिलकावलीलाञ्छितं करिष्ये। 4) जइ न हसइत्यत्र यदि न हससि न कुप्यसि न रुदसि तदा तव राजते रत्नकण्ठिका। अन्यथा यदि हसनादिकं किमपि करोषि तदा नवरं केवलं दशनपङ्क्तिरेव राजते। किंविशिष्टा। स्फुरदधरोष्ठेन ईषद् दृश्यमाना। रत्नकण्ठिका तावद्राजते यावद्दन्तपङ्क्तिर्न दृश्यते। यदि दन्तपङ्क्तिर्दृष्टा तर्हि रत्नकण्ठिका जाता निःशोभेति भावः। 5) प्रतिहतबहुविधनरपतिकुञ्जरसमूहः परसाहाय्यविवर्जितः महीतले निरुपमविक्रमस्त्वं राजते कण्ठीरवो निश्चितम्।

१ कमला॰ ADP; कन्दरो॰ S. २ हयलुद्धओ CS; हयलुद्धउ AD. ३ मिओ S. ४ दुपु BP. दुत्थु S. ५ कमलायरु वि S. ६ विरहहि CD. ७ मेलमु A. ८ थविवु S. ९ लंछिउं B. १० नवर ADP. ११ पय BP. १२ महीअलि A. १३ तुहं B; तुहु ACDS. १४ रायराय D, रायव S.

"जसु अतुलिअगयंचलभरि कंपहिं कुलमहिहर सवि सयसुंधर ।
निअकुलनहयलससहर वीरसिहामणि जयमज्झि तुहुं जि पर ॥ १६.१ ॥

चूतौ छड्डुणिका ञजैः ॥ १७ ॥

सप्त चतुर्मात्राः त्रिमात्रश्च । ञजैरिति दशभिरष्टाभिश्च यतिश्चेत्तदा छड्डणिका ।
यथा—

"जा किन्नरमिहुणिहिं तुहं पुहईसर पत्थुंअ सुचरिअपद्धडिअ ।
ता गिरिगुहसंधिहिं कायर तक्खणि हुअ रिउघोरणि छड्डणिअ ॥ १७.१ ॥

चूः स्कन्धकसमम् ॥ १८ ॥

ञजैरिति वर्त्तते । अष्ट चतुर्मात्राश्चेत्तदा स्कन्धकसमम् । यथा—

"नारिहुं वयणुल्लइं सरि खंधयसमजलहिं मज्झि मज्जंतिअहं ।
ओ गिण्हहिं विब्भमुं मणहरअहिणववियसिअसररुहपंतिअहं ॥ १८.१ ॥

तत् मौक्तिकदाम ठजैः ॥ १९ ॥

ठजैरिति द्वादशभिरष्टभिश्च यतिश्चेत्तदा तदेव स्कन्धकसमं मौक्तिकदाम । यथा—

"जइ तुहु पवयणु सामिअ हिअइ ठविज्जइ छणससहरकरनिम्मलुं ।
ता निच्छउ अहिरामहु मुत्तिअदामहु तरलहु संगहु निप्फलु ॥ १९.१ ॥

नवकदलीपत्रं ढजैः ॥ २० ॥

ढजैरिति चतुर्दशभिरष्टभिश्च यतिश्चेत्तदा तदेव स्कन्धकसमं नवकदलीपत्रम् ।
यथा—

1) जसु इत्यत्र यस्य तवातुलितगजबलभरे सति कम्पन्ते । के । कुलमहीधराः पर्वताः ससुन्धराः । हे निजकुलनभस्तलशशधर । वीरशिखामणिर्जगन्मध्ये परं केवल त्वमेव । 2) जा किन्नरेत्यत्र यावत्किन्नरमिथुनैः तव हे पृथ्वीश्वर प्रस्तुता सुचरितपद्धतिस्तावद्रिपुघोरणयो गिरिगुहासन्धीनां त्याजिका भूताः कातराः सत्यः । 3) नारीत्यत्र नारीणां वदनान्येवेति विगृह्य 'स्वार्थे कश्च वा' (सि० है० ८.२.१६४) इति ल्लः प्रत्ययः । वदनानि सरांसि स्कन्धकसमजलस्य मध्ये निमज्जन्तीनां मनोहराभिनवविकसितसरोरुहपङ्क्तीनां विभ्रमं गृह्णन्ति । 4) जइ तुहेत्यत्र हे वीतराग यदि तव प्रवचनं हृदये संस्थाप्यते । कीदृक् । क्षणशशधरो रश्मिकरन्दुवद्विर्मलम् । तदा अभिरामस्य मौक्तिकदाम्नः संग्रहो तरलाकारो निष्फलमेव ।

१ गयन्नल A. २ नहिमर O. ३ तुहं जि BN. ४ छड्डनिअ N. ५ तुहु A. ६ पहुईसर A. ७ पत्थुम BS. ८ तो A. ९ संधिहं ABP. १० रिउभारनि A. ११ छड्डनिअ N. १२ नारिहिं AB. १३ जतु BSP. १४ मज्जंतिअहं मज्जंतिअह N. १५ गिन्हिहि BDN; गेन्हहिं P. १६ मिन्नमहर A. १७ वियहिसयररह A. १८ छम्मिअ ABP. १९ पविज्जइ NS. २० पन NS. २१ मिम्मलु A. २२ अहिरामह B. २३ निप्फलु D.

२८ छन्दो०

[1]नवकयलीपत्तिहिं[1] वीअणु पत्थुउं[2] कमलेहिं[3] विरइउ सत्थरउ।
तह वि हु दाहु पवट्टइ[4] मज्झु सीउ उवयरणु[5] पिअसहि संवरउ ॥ २०.१ ॥

## पचूदैः कृतेष्वेषु स्त्रीत्वम् ॥ २१ ॥

षण्मात्रश्चतुर्मात्रपञ्चकं द्विमात्रश्चेत्येभिर्मात्रागणैः कृतेष्वेषु स्कन्धकसमादिषु त्रिषु स्त्रीत्वं स्त्रीलिङ्गशब्दाभिधेयत्वम्। स्कन्धकसमा, मौक्तिकदाम्नी, नवकदलीपत्रा चेत्यर्थः। यतिः सैव। स्कन्धकसमा यथा—

[2]गयपत्तपरिग्गह सुमणसविरहिअ फलवज्जिअ वरुखंधसम।
कंटयपरिवारिअ गिरिकंदरगय तुह रिउ वसहिं विमुक्कम ॥ २१.१ ॥

एवमितरयोरप्युदाहार्यम् ॥ २१.१ ॥

## चूपावायामकम् ॥ २२ ॥

सप्त चतुर्मात्राः पञ्चमात्रश्चैक आयामकम्। यथा—

[3]आयामयधवलत्तणगुणकलिए पेच्छंवि केअइदलि[6] अलि विलसिरु[7]।
संभरि पिअनयणइं विरहज्जरजज्जरिअंगमणु मुज्झइ पहिउ चिरु ॥ २२.१ ॥

## तत्काञ्चीदाम त्रजैः ॥ २३ ॥

त्रजैरिति दशभिरष्टाभिश्च चेद्यतिस्तदा तदायामकं काञ्चीदाम। यथा—

[4]अंगय फुडिअ तुडिअ नवकंचुअगुण दलिउ[8] कंचिदामु[9] सनिअंसणु[10]।
तहिं तुह गुणसवणिण ऊससिअंगिहिं[11] अप्पटिहयसासणु हुं[12] मयणु ॥२३.१ ॥

## रसनादाम ठजैः ॥ २४ ॥

ठजैरिति द्वादशभिरष्टाभिश्च यतिश्चेत्तदा तदायामकं रसनादाम। यथा—

1) नवकेत्यत्र नवकदलीपत्रैर्वीजनं प्रस्तुतम्। कमलैर्विरचितः स्रस्तरः। तथापि दाहः प्रवर्तते। (प्रवर्धते P) मम शीतोपचयकरणं शीतोपचारं संवृणु। 2) गयपत्तेत्यत्र हे राजन् विमुक्तक्रमा गिरिकन्दरगतास्तव रिपवः सन्ति। कथंभूताः वरस्कन्धसमाः। यथा हि वरस्कन्धाः गिरिकन्दरगताः वसन्ति तथा रिपवोऽपि। कथंभूताः। गजा हस्तिनः पत्राणि वाहनानि परिग्रहः कलत्रं सुमनसः साधवस्तै रहिताः। फलेन गजादीनां उपभोगेन वर्जिताः। कण्टकैः खलैः परिवारिताः। वरस्कन्धपक्षे गतः पत्रपरिग्रहो येषाम्। सुमनोभिः पुष्पैर्विरहिताः फलवर्जिताः कण्टकैः परिवारिताः। 3) आयामेत्यत्र आयतत्वधवलत्वगुणकलिते केतकीदले विलसन्तं अलिं प्रेक्ष्य प्रियानयने स्मृत्वा विरहज्वरजर्जरांगमनाः मुह्यति पथिकश्चिरम्। 4) अंगयेत्यत्र अङ्गानि स्फुटितानि। रोमाञ्चः उत्पन्नः इत्यर्थः। त्रुटिता नवकञ्चुकस्य गुणास्तन्तवः। दलितं सवसनं परिधानवस्त्रसहितं काञ्चिदाम कटिमेखला। तस्मात्तव गुणश्रवणेन उच्छ्वसिताङ्गाभिः अप्रतिहतशासनो मूर्खो मदनः।

१ पत्तहिं CN. २ पत्थुओ SS; पत्थओ BC. ३ कमलिहिं CDN. ४ पवट्टर P. ५ महु सीटउव॰ B; महु सीउंयय॰ P. ६ धवलत्तगुण॰ A. ७ पेच्छिवि CD. ८ जरिज्जणु A. ९ कंचुअ॰ N. १० रज्जिअ B. ११ ऊससिअंगहिं AP. १२ हुउ BP; हु O. १३ रसना॰ FL.

"तुह दंसणतूरंतिए[1] सुंदर मुद्धए[2] मुणि जं किउ पब्भलिउ ।
हारु णिअंबि णिवेसिउ रसणादामु वि थणसिहरोवरि घल्लिउ ॥ २४.१ ॥

**चूडामणिर्ढजैः ॥ २५ ॥**

ढजैरिति चतुर्दशभिरष्टभिश्च यतिश्चेद्यदा तदायामकं चूडामणिः । यथा –

"बहुविहसमरंगणि खग्गिण[3] नवनव जयसिरि जं पइं परिणिज्जइ[4] ।
निवचूडामणि तुह किंत्तिहिं मंगलकारणि तं जगु धवलिज्जइ ॥ २५.१ ॥

**पचूतैः कृतान्यायामकादीन्युपात् ॥ २६ ॥**

षण्मात्रेण चतुर्मात्रपदकेन त्रिमात्रेण कृतान्यायामकादीनि चत्वार्यपि उपात्पराणि भवन्ति । उपायामकं, उपकाञ्चीदाम, उपरसनादाम, उपचूडामणिरित्यर्थः । यतिरपि सैव । तत्रोपायामकम् । यथा –

"तणुअंगिहिं लोअणनलिणिहिं उअ आयामिण केअइदलु निज्जिउं ।
वयणुज्जइं कंतिकडप्पिण तह मयलंछणमंडलु अवहत्थिउ ॥ २६.१ ॥

एवमन्यान्यप्युदाहरणीयानि ॥ २६.१ ॥

**चूदौ स्वप्नकम् ॥ २७ ॥**

अष्टौ चतुर्मात्रा द्विमात्रश्च स्वप्नकम् । यथा –

"पिउ आइउ नियडिउं पईहिं सपणयवयणिहिं अणुणिवि माणु मुआविअ ।
इअ सिविणयभरि आलिंगिमि जाम्वहिं ताम्वहिं सहि हयकुक्कुडि रडिअ ॥ २७.१ ॥

**तदू भुजङ्गविक्रान्तं ठजैः ॥ २८ ॥**

ठजैरिति द्वादशभिरष्टभिश्च चेद्यतिस्तदा तदेव स्वप्नकं भुजङ्गविक्रान्तम् । यथा –

"तुह रणि नट्ठ रसायलि गय अरि कारणि इणि किर भुअंग विकंतय ।
ताइं विलासभवणि पुरि लीलावणि परिअंचहिं निवसहिं चिरु गयभय ॥२८.१॥

---

1 ) तुहेत्यत्र हे सुभग तव दर्शनत्वरमाणया मुग्धया युवत्या यत्कृतम् । अन्तुः हारो नितम्बे निवेशितः । रसनादामापि स्तनशिखरोपरि निहितम् । सम्भ्रमवशादित्यर्थः । 2 ) बहुविहेत्यत्र बहुविधसमराङ्गणे खड्गेन नवनवा जयश्रीर्यस्य दृश्यते यथा । हे नृपचूडामणे तव कीर्तिभिः मङ्गलकारणे महदपि जगत्त्रयं धवलयते धवलीक्रियते इत्यर्थः । 3 ) तनुअंगि इत्यत्र अन्यस्या लोचननलिनाभ्यां यस्य दैर्घ्येण कर्णमिदं विनिर्जितम् । तथा यदनेन कान्तिसमृद्धेन मृगलाञ्छनमण्डलं चन्द्रबिम्बं अपहसितं तिरस्कृतमित्यर्थः । 4 ) पिउ आईत्यत्र प्रिय आयातः । निर्गतः पादयोः । स्वप्नवचनैः स्नेहवचनैरनुनीय मानं मोचिता । इयमुना प्रकारेण स्वप्नभरेण आलिङ्गामि यावत्तावत् हतकुक्कुटेन रटितम् । 5 ) तुह रणेत्यत्र तवारयो रणे नष्टाः रसातलं गताः किल । अनेन कारणेन भुजंगा विक्रान्ताः विलासभवने पुरी लीलावने पर्यटन्ति निवसन्ति । तेषु नष्टेषु सत्सु तेन कारणेन भुजङ्गाः गतभयाः इत्यर्थः ।

१ मुद्धाए A. २ पब्भलिउ APP. ३ खग्गेण P. ४ दुं P. ५ खिग्गिणो ४३. ६ इच्छिणो ४३. ७ निज्जिउ P. ८ पवहइ PKP. ९ हुलत्थिउ P. १० कुक्कुडि P; कुकुड कुक्कुडिम A. ११ करोणि P.

## ताराध्रुवकं दजैः ॥ २९ ॥

दजैरिति चतुर्दशभिरष्टभिश्च यतिश्चेचदा तदेव समकं ताराध्रुवकम्। यथा—

[1]तुह रिउ वणगय दिसिमोहिअ ताराधुव अवलोअहिं[1] जाम्वहिं अवहिअ।
वाहजलाविलनयण निअहिं न हु ताम्वहिं हुअ हिअइ मरणासंकिअ ॥२९.१॥

## नवरङ्गकं तजैः ॥ ३० ॥

तजैरिति षोडशभिरष्टाभिश्च यतिश्चेचदा तदेव समकं नवरङ्गकम्। यथा—

[2]दहिअक्खयघणचंदणमालिअनवनवरंगयवावडे[2] निअवि पिअ।
गाढोकंठासरलिअँसुअजुउ[3] अवँरुंटइ[4] रइरसभरकंदलिअ ॥ ३०.१ ॥

## पिश्चौः स्थविरासनकम् ॥ ३१ ॥

तजैरिति वर्त्तते। षण्मात्रत्रयं चतुर्मात्रचतुष्टयं च तजैर्यतिश्चेचदा[5] स्थविरासनकम्।

यथा—

[3]दारविवज्जिअ विसयपरंमुह खलिअगइक्कम अइपसरिअवेविअ।
थेरग्गिण तवसित्तु पवज्जिवि ठिअँ[6] थेरासणि तुह वरुण वि वेरिअँ[7] ॥३१.१॥

## चृपौ सुभगम् ॥ ३२ ॥

तजैरिति वर्तते। सप्त चतुर्मात्राः षण्मात्रश्च सुभगम्। यथा—

जलइ सरोवरि नीलुप्पलवणु वणि लय फुल्लिअ नहयलि हिमकिरणु।
विरहरहक्कइं तुह वर्णुअंगिहिं[8] [4]सुहय विणिम्मिउ[9] जलु थलु नहु जलणु ॥ ३२.१ ॥

---

1) तुह रिउ इत्यत्र तव रिपवो वने गताः। दिङ्मूढाः ताराध्रुवं च अवलोकयन्ति। यावदवहिताः सावधानाः बाष्पजलाविलनयनाः न पश्यन्ति तावद् भूवाः सञ्जाताः हृदये मरणाशङ्किताः। यतो 'यो ध्रुवादि न पश्यति [illegible] अचिरेण प्राणत्यागं करोति' इति निमित्तशास्त्रे। 2) दहिअक्खेति दध्यक्षतघनचन्दनमालिकाः नवनवरङ्गकाः वर्णकाश्च तेषु व्यापृतौ निरीक्ष्य प्रियां कश्चिदालिङ्गति। कीदृक्। गाढोत्कण्ठया सरलितौ लम्बितौ भुजौ येन सः। तथा रतिरसभरेण कन्दलितः रोमाञ्चितः। 3) दारेत्यत्र तस्मा अपि तव वैरिणः स्थविरासने स्थिताः। वृद्धा हि निश्चलासने स्थिता भवन्ति। कीदृशाः वृद्धा वैरिणश्च। दारैर्विवर्जिताः विषयपराङ्मुखाः। विषयाः शब्दाद्याः पक्षे देशाश्च। स्खलितः गतिक्रमो येषां ते। उभयत्र समानं विशेषणम्। अतिप्रसृतं वेपितं येषां ते। वि० समानम्। किं कृत्वा स्थिताः। प्रतिपद्य तपस्वित्वं वराकत्वम्। पक्षे तपःकारित्वम्। केन। वैराग्येण पक्षे विगतरागत्वेन। 4) सुहयेत्यत्र हे सुभग सरोवरे नीलोत्पलवनं ज्वलति। वने पुष्पिता लताः। नभस्तले हिमकिरणः ज्वलति। तव विरहोद्वेकेण तन्वङ्ग्याः जलं स्थलं नभः ज्वलनदीप्तं निर्मितम्।

---

१ अवलोवहिं BP. २ नावड N. ३ सरलअमुअभुअ A; -भुयजुउ BP; -भुअजुओ N. ४ अवरुडइ ACDN; अवरुंडइ S. ५ तदा dropped in DP. ६ ठिअ N. ७ विरिअ N. ८ तणुअंगहिं C. ९ विणिम्मिओ DS; विम्मिअ F.

पचीपचदाः पवनधुवकं ढजैः ॥ ३३ ॥

पण्मात्रश्चतुर्मात्रचतुष्टयं पण्मात्रचतुर्मात्रद्विमात्राः पवनधुवकम् । ढजैरिति चतुर्दशभिरष्टभिश्च यतिः । यथा—

[1]वहुदयखरखुरखंडिअमहिउट्ठिअरइं रिउवहुनीसासपवणधुंइं ।
जसु पयाणछणि अच्छिजुअलअणिमिसनयणत्तणु सुरसुंदरि निंदहिं ॥ ३३.१ ॥

पचापचिदाः कुमुदं ञजैः ॥ ३४ ॥

पण्मात्रश्चतुर्मात्रद्वयं पण्मात्रश्चतुर्मात्रत्रयं द्विमात्रश्च कुमुदम् । ञजैरिति दशभिरष्टाभिश्च यतिः । यथा—

[2]नरु लच्छिविवज्जिउ मुचइ लोइण सव्वुं वि ईसरकयअणुसरणु ।
मउलिअ कमलायर निसि अलि मेल्लिवि सेवहिं विअसंतउं कुमुअवणु ॥ ३४.१ ॥

तद्भाराक्रान्तं ठजैः ॥ ३५ ॥

ठजैरिति द्वादशभिरष्टभिश्च चेद्यतिस्तदा तदेव कुमुदं भाराक्रान्तम् । यथा—

[3]कंचणभूसण छड्डिअं खंडिवि वसणु वि लहुइउ तुरिअ पलाइरिहिं ।
तु वि किच्छिण रमणत्थलभारकंतिहिं गम्मइ तुह रिउसुंदरिहिं ॥ ३५.१ ॥

चूतौ कन्दोट्टम् ॥ ३६ ॥

अष्टौ चतुर्मात्राः त्रिमात्रश्च कन्दोट्टम् । यथा—

[4]किं झाईउ तिण अविचलचित्तिण किं निम्मलु तवु किउ समरिउमित्तिण ।
जं तुह मुहविब्भमहरु कंदोट्टं विसंट्ट तरुणि चुंविज्जइ भमरिण ॥ ३६.१ ॥

पाचुता भ्रमरद्रुतं ञजैः ॥ ३७ ॥

पण्मात्रद्वयं चतुर्मात्रपञ्चकं त्रिमात्रश्च भ्रमरद्रुतम् । ञजैरिति दशभिरष्टभिश्च यतिः । यथा—

---

1) वहुदयेत्यत्र वहुदयखरखुरखण्डितमहुत्थितरजसा रिपुवधूनिःश्वासपवनधुतेन यस्य प्रयाणक्षणे सुरसुन्दर्योऽक्षियुगलस्यानिमिषनयनत्वं निन्दन्ति । तासां विकसितत्वात् लोचनेषु रेणुपाताद्दित्यर्थः । 2) नरु लच्छीत्यत्र नरो लक्ष्म्या विवर्जितो लोकेन मुच्यते । यतः सर्वोऽपि जनः ईश्वरकृतानुसा(स)रणः । ऋद्धिमन्त पुरुषमनुसरतीति भावः । यतोऽलयो भ्रमराः मुकुलितान्संकुचितान् [ कमलाकरान् ] सन्ध्यान्ते त्यक्त्वा रात्रौ कुमुदवनं सेवन्ते विकसत् । 3) कंचणभूसणेत्यत्र काञ्चनभूषणानि त्यक्त्वा वसनमपि खण्डयित्वा लघूकृतम् । भलघु लघूकृतमित्यर्थः । भूषणादिभारनिरासात् । तथापि कृच्छ्रेण रमणस्थलभराक्रान्ताभिर्गम्यते भारमुद्वोढुमशक्यत्वात् तव रिपुसुन्दरीभिः । 4) किं झाईत्यत्र किं ध्यानं तेन अविचलचित्तेन । किं निर्मलं तपः कृतं तेन समरिपुमित्रेण सता । यत् हे तरुणि भ्रमरेण तव मुखविभ्रमहर विकसितपद्मं चुम्ब्यते आश्लिष्यते । तस्याः सौभाग्यातिशयवर्णनमित्यर्थः ।

---

१ धुइ ACNS. २ तरु CN. ३ विवज्जउ P. ४ सव्वि CDN. ५ कमलाइर P. ६ मेल्लवि P. ७ छंडिअ A; छड्डिअ N. ८ झाइउ A; झाइओ B. ९ कंदोट्टु BEPS. १० विसट्टु BEP.

"[1]कुसुमुग्गमु अनुगमे अदकुडयेहं पेच्छिवि एह वि हु न हु रइ मटहिं[1] ।
नवपाउसि सपइ पइसवइ जो जाइ निअव भमर हुउ हिंडहिं ॥ ३७.१ ॥

### तत्सुरक्रीडितं ठजैः ॥ ३८ ॥

ठजैरिति द्वादशभिरष्टभिश्च यतिश्चेत्तदा तद् भ्रमरद्रुतं सुरक्रीडितम् । यथा–
"[2]सग्गु पहुचिहिं तुंद परिपंथिहि किउ अइसकडु पुहईसर निच्छिउ ।
सच्छरगण सुर कीलिउं सपहिं नोहिं ति नदणवणपरिसरि इच्छिउ ॥ ३८.१ ॥

### सिंहविक्रान्तं दजैः ॥ ३९ ॥

दजैरिति चतुर्दशभिरष्टभिश्च यतिश्चेत्तदा तदेव भ्रमरद्रुतं सिंहविक्रान्तम् । यथा–
"[3] अच्छउ ता उब्भडभुअबलु चक्खुक्खेवेण विहडयंतु रिउभडहिअउ ।
सुरनरसीहविक्कंतचरिउ लघेविणु ठिउ रेहइ पुहईसरतिलउ ॥ ३९.१ ॥

### कुङ्कुमकेसरं तजैः ॥ ४० ॥

तजैरिति षोडशभिरष्टभिश्च यतिश्चेत्तदा तदेव भ्रमरद्रुतं कुङ्कुमकेसरम् । यथा–
"[4]नयणविलासिण निज्जिअ कुवलय कतिकडप्पिण कुंकुमकेसरनिअरु ।
दसणझलक्कइ हीरय विनडिअ ससहरु वयणिण काइ न मुद्धहि पवरु ॥ ४० १ ॥

### च्लः वालभुजङ्गमललितम् ॥ ४१ ॥

च्लः इति लुप्तविभक्तिको निर्देशः । नर चतुर्मात्रा वालभुजङ्गमललितम् । यथा–

1) कुसुमुग्गेति [अत्र] भ्रमरा अर्जुनकदम्बीकुटजानां कुसुमोद्गम दृष्ट्वा क्वापि रतिं न मण्डयन्ति सम्प्रति नवप्रावृषि प्रविशन्त्याम् । प्रावृषि जातिपुष्पाणि न भवन्ति तेन जातिं पश्यन्त सन्तो द्रुत शीघ्र हिण्डन्ते भ्रमन्ति इत्यर्थ । 2) सग्गु पेत्यत्र हे पृथ्वीश्वर निश्चित तव रिपु[परि]पन्थिभिः स्वर्गं गवैरनिसङ्कट कृतम् । ततः साप्सरोगणा देवा नन्दनवनपरिसरे ईप्सित यथा भवति तथा एव क्रीडितु न शक्नुवन्ति न समर्था भवन्ति । दारग्रहणोत्थभयादित्यर्थ । 3) अच्छउ तेत्यत्र आस्तां तावदुद्भटभुजबल अर्थात्त्वदीयम् । पृथ्वीश्वरतिलक चक्षुःक्षेपेणापि रिपुभटहृदय विघटयन् तवासिंहविक्रान्त लङ्घित्वा राजते । 4) नयनेत्यत्र नयनविलासेन निर्जितानि कुवलयानि । कान्तिसमूहेन कुङ्कुमकेसरं निर्जितं । दसणझलक्केन दशनकान्त्या हीरका विनटिता । शशधरो वदनेन विनटित । मुग्धाया किं न प्रवर अपि तु [सर्वं] प्रवर वर्तते इत्यर्थं ।

१ कुडयह ACN  २ पेच्छवि AB, पेच्छेवि P  ३ मडुहिं S  ४ पइसतपतइ A  ५ जाय B  ६ दुउ S, दुअ A, दुओ N  ७ तुदु P  ८ पुहइसर ANS  ९ नोहिं ति N, नो तिहिं A  १० वण dropped in ACDNS  ११ विहडयतु N  १२ हिअओ B  १३ ठिउ BNPS  १४ पुहइसरतिलओ N  १५ निज्जिउ A  १६ कुवलअ N  १७ कडप्पाणिं S  १८ दसण B  १९ विनिडिय ABC  २० मुदइं P  २१ गमविलसित A.

[1]दुद्दमरिउमहिवालभुअंगमललिअझडप्पणि तुंहु निच्छइ गरुडोवमु।
ज पुण पुरिसोत्तिमसिरँचूडामणि वुचसि पुहईवल्लह त निरुत्तमु॥ ४१ १॥

## पिचीदा उपगन्धर्वं ठजैः॥ ४२॥

षण्मात्रत्रयं चतुर्मात्रचतुष्टयं द्विमात्रश्चोपगन्धर्वम्। ठजैरिति द्वादशभिरष्टभिश्च यतिः। यथा—

[2]गयघड-तुरयघट्ट-रहवूह-महाभटनिवँह रयणभंडार समिद्धु वि।
उँव गंधव्वनयरसमु पुहइवइत्तणु तिणुँ जिम्व चयहिँ विवेअवत कि वि॥ ४२ १॥

## तत्सङ्गीतं ढजैः॥ ४३॥

ढजैरिति चतुर्दशभिरष्टभिश्च यतिश्चेचदा तदेवोपगन्धर्वं सङ्गीतम्। यथा—

[3]वज्जहिँ गज्जिरघणमद्दल नचहिँ नहयलअगणि नैव चचलविज्जुल।
गायहिँ सिहि इंअ संगीअउ पाउसलच्छिहिँ करइ जुआणह मेँण आउल॥ ४३ १॥

## उपगीतं तजैः॥ ४४॥

तजैरिति षोडशभिरष्टभिश्च यतिश्चेचदा तदेवोपगन्धर्वमुपगीतम्। यथा—

[4]जसु भुअबलु हेलुद्धरिअधरणि निसुणिवि वणयरगणउवगीउ सुविक्कमु।
अज्ज वि हरिसिअँ नवदब्भकुरदभिण पयँटहिँ कुलमहिहर पुलउग्गमु॥ ४४ १॥

## चूपौ गोन्दलम्॥ ४५॥

[11]अष्टौ चतुर्मात्राः पञ्चमात्रश्च गोन्दलम्। यथा—

[5]सइ विज्जुलअविउत्तउ तुहु जलहर करि गुंदलु निद्ध न जाणसि विरहिअँह।
इअ भणि चिंतिवि[12] किपि अमगलु वइअँहु असुपवाहु पलुट्टउ पथिअह॥ ४५ १॥

1) दुद्दमेत्यत्र दुर्दमरिपुमहीपालभुजङ्गमस्खलितविनाशने त्वं निश्चयेन गरुडोपमः। यत्पुनः पुरुषोत्तमस्य नारायणस्य शिरश्चूडामणिरुच्यसे हे पृथ्वीवल्लभ तदनुत्तमम्। द्वितीयपक्षे पुरुषोत्तमाः पुरुषप्रधानाः।
2) गजगडेत्यत्र गजघटा-तुरङ्गमघटा-रथव्यूह महाभटनिवह-रत्नभाण्डागार समृद्धमपि गन्धर्वनगरसमानम्। आकारे हि गन्धर्वनगरं क्षणदृष्टनष्टस्वरूपं भवति। तत्समानं पृथ्वीपतित्वं तृणमिव केऽपि विवेकवन्तस्त्यजन्ति।
3) वज्जहींत्यत्र गर्जनशीला घना एव मर्दला वाद्यन्ते। नभस्तलाङ्गणे नवचञ्चला विद्युतो नृत्यन्ति। गायन्ति शिखिनो मयूराः। इति प्रकारान्तरेण प्रावृड्लक्ष्म्याः सङ्गीतकं प्रेक्षणकं यूनां मनांसि आकुलानि करोति।
4) जसु इत्यत्र यस्य भुजबलं श्रुत्वा। किंविशिष्टम्। हेलया उद्धृता धरणी येन तत्। पुनः किम्। वनचरोपगीतम्। पुनः किम्। सुविक्रमम्। अद्यापि हर्षिताः कुलमहीधरा नवदर्भाङ्कुरदम्भेन पुलकोद्गमं प्रकटयन्ति रोमाञ्चकञ्चुकम्। 5) सइत्यत्र सदा विद्युता अवियुक्तस्त्वं हे जलधर कुरु गुन्दलं घर्षणम् (वादनम्?)। अथवा गुन्दलं मर्दलध्वनिं गम्भीरध्वनिमित्यर्थः। अस्निग्धो पीडां न जानासि विरहिणानाम्। इत्युक्त्वा भणित्वा निजदयिताः किमप्यमङ्गलं मृत्युप्रमुखं चिन्तयित्वा पथिकानां अश्रुप्रवाहः पर्यस्तः पतितः।

१ दुद्धन B २ उत्तमरणाण P ३ तुह ॰ ४ सिरचू॰ P ५ निद्धु D ६ ओ DFP
७ तिणु A, तणु BF ८ नवु BP ९ इइ ॰ १० मज्ञ आउल्लु A. ११ हरसिअ B; हरिसिय A
१२ पयट्टिहँ BF १३ The sentence is dropped in B १४ विरहिअह A. १५ चिंतवि CDN
१६ वइअहं A

पचूता रथ्यावर्णकं ठजैः ॥ ४६ ॥

पण्मात्रश्चतुर्मात्रसप्तकं त्रिमात्रश्च रथ्यावर्णकम् । ठजैरिति द्वादशभिरष्टभिश्च यतिः । यथा –

[1]"विरहरहक्कई सुहय न जंपइ न हसइ जीवइ केवलु पिअपच्चासइ ।
अहवा किंचिउं[1] रत्थावण्णणु करिसहुं निच्छेइं[2] मरिसइ[3] तुहुं[4] जसु नासइ ॥ ४६.१ ॥

तच्चचरी ढजैः ॥ ४७ ॥

ढजैरिति चतुर्दशभिरष्टभिश्च यतिश्चेत्तदा तदेव रथ्यावर्णकं चचरी । यथा –

[2]"चचरि चारु चवहिं[5] अच्छर कि वि रासउ खेलहिं कि वि कि वि गायहिं वरधवल[6] ।
रेयहिं[7] रयणसत्थिअ कि वि दहिअक्खय गिण्हहिं कि वि जम्मूसवि तुइ जिणधवल ॥४७.१॥

अभिनवं तजैः ॥ ४८ ॥

तजैरिति षोडशभिरष्टभिश्च यतिश्चेत्तदा तदेव रथ्यावर्णकमभिनवम् । यथा –

[3]"किं अज्ज वि माणंसिणिमाणसि माणु विसट्टइ माणइ न पयाणउ रमणु ।
इअ संजाइण कोविण णायइ आरत्तयतणु अहिणवउग्गमि हिमकिरणु ॥ ४८.१ ॥

चूपचताश्चपलम् ॥ ४९ ॥

तजैरिति वर्त्तते । चतुर्मात्रपदकं पण्मात्रश्चतुर्मात्रत्रिमात्राश्चपलम् । यथा –

[4]"सुरसरितुंगतरंगसहोअर कित्ति धवल तुह ठाणेट्ठिउ[10] जगु धवलइ ।
पुट्ठि भमंतिहु[11] रिउअयकित्तिहुं[12] कालत्तणु न हु निवचूलामणि कयलेइ[13] ॥ ४९.१ ॥

चूपौ चामृतम् ॥ ५० ॥

तजैरिति वर्त्तते । चतुर्मात्रपदकं पण्मात्रश्चतुर्मात्रद्वयं चामृतम् । यथा –

---

1) विरहेत्यत्र विरहोद्रेकेण हे सुभग न जल्पति न हसति केवलं प्रियप्रत्याशया जीवति । अथवा किंचिद् रथ्यावर्णनं शून्यवर्णनं करिष्यामः । निश्चयेन सा म्रियते । तव यशो नश्यति । 2) चचरीत्यत्र हे जिनधवल हे जिनवृषभ तव जन्मोत्सवे चर्चरीं कथयन्ति अप्सरसः । काः अपि रासकान् खेलन्ति । काः अपि वरधवलानि गायन्ति । काः अपि वर(रत्न-?)स्वस्तिकान् रचयन्ति । काः अपि दध्यक्षतानि गृह्णन्ति । 3) किं अज्जेत्यत्र किमद्यापि मनस्विनीमानसे चित्ते मानोऽहंकारो विसर्पति । कस्मात्पादावनतं चरणलग्नं रमणं प्रियं न मानयति । इति संजातेन कोपेनेव आरक्ततनुरभिनवोद्गमे नवोदये हिमकिरणः शीतांशुः । 4) सुरसरीत्यत्र सुरसरिद् गङ्गा । तस्यास्तरङ्गाः कल्लोलाः । तेषां सहोदरा तव धवला कीर्तिः स्थानस्थितमपि जगद् धवलयति । पृष्ठे भ्रमन्तीनामपि वैरिकुकीर्तीनां कालत्वं हे नृपचूडामणे न कलयति नाश्रयति ।

---

१ किंचिउ N; केत्तिउ BP. २ निच्छउ P. ३ स मरइ BRP. ४ तुह O. ५ चिवहिं P. ६ वरधवलु ABCDN. ७ रेयहि A. ८ च यतिः dropped in D. ९ मणु NS, १० ठाणट्ठिउ N; ठाणठिउ D. ११ भमतिहिं B; भमंतिहि P. १२ कित्तिहिं B; कित्तिहि P. १३ कलइ ANS.

[1]उण्हयँ अमयमऊहमऊह वि दूसहु चंदणपंकु वि जलइ लयाहरु वि ।
इअ तुह विरहिण तहि तणुअंगिहि सुहय सुहाइ न किंपि वि पसिअँहि दय करिवि ॥५०.१॥

चतृदौ सिंहपदम् ॥ ५१ ॥

तजैरिति वर्त्तते । नव चतुर्मात्रा द्विमात्रश्च सिंहपदम् । यथा—

[2]जावयरसरंजिअवरकामिणिपयपडिबिंबिहिँ लंछिइँ जइ किंर आसि सइ ।
संपइ हयवणगयरुहिरारुणसीहपयंकिअ तुह रिउघरइं ति पिच्छिअँहि ॥ ५१.१ ॥

तद्दीर्घकं ढजैः ॥ ५२ ॥

ढजैरिति चतुर्दशभिरष्टभिश्च यतिश्चेत्तदा तदेव सिंहपदं दीर्घकम् । यथा—

[3]दीहरभुअदंडविडंबिअसुरसिंधुरकरु उरयडतुलिअविसालसिलायलु ।
उब्भडकोअँडपयंडिमहसिअधणंजउ पिउ एकंगिण जिणइ वेरिबलु ॥ ५२.१ ॥

पचृः कलकण्ठीरुतम् ॥ ५३ ॥

ढजैरिति वर्त्तते । षण्मात्रश्चतुर्मात्राष्टकं च कलकण्ठीरुतम् । यथा—

[4]सिउ मलयसमीरणु अंगिहिँ अहिणवपल्लव दिट्ठिहिँ कलयंठीरुउ कण्णिहिँ ।
विसकंदलिसँनिह मुद्धहे दूसहँ खणि खणि पाणंतिउ मुच्छाभरु अप्पहिँ ॥ ५३.१ ॥

पाचृदाः शतपत्रम् ॥ ५४ ॥

ढजैरिति वर्त्तते । षण्मात्रद्वयं चतुर्मात्रषट्कं द्विमात्रश्च शतपत्रम् । यथा—

[5]एक्कु पसारइ जइ दिअवइ कर तु वि मउलइ सयवत्तु निरारिउँ आउलेउं ।
पहु तुहँ पुण करसरसीरुहु दिअवइलक्खि वि दिट्ठइ फुडु विअसइ अगोलेउं ॥५४.१॥

1 ) उण्हयेत्यत्र अमृतमयूखमयूखा अपि चन्द्रकिरणा अपि उष्णाः । चन्दनपङ्कोऽपि दुःसहः । ज्वलति लतागृहमपि । इति तव विरहेण तस्याः तन्वङ्ग्याः हे सुभग न किमपि सुखायते । प्रसीद प्रसादं कुरु । अनुग्रहं कुरु दयां कृत्वा । 2) जावयेत्यत्र यानकरसरञ्जितवरकामिनीपदप्रतिबिम्बितैर्लाञ्छितानि यानि किलासन् सदा सम्प्रति हयवनगजरुधिरारुणसिंहपदाङ्कितानि तव रिपुगृहाणि तानि दृश्यन्ते । शून्यत्वात् वनश्वापदानां निवासः । 3 ) दीहरेत्यत्र दीर्घभुजदण्डविडम्बितसुरसिन्धुरकरः उर स्थलतुलितविशालशिलातलः उद्भटकोदण्डप्रचण्डिमहसितधनंजयोऽर्जुनः प्रियः एकाङ्गेन न परसाहाय्येन वैरिबलं जयति । एक एवेत्यर्थः । 4) सिउमेत्यत्र मृदुमलयसमीरणः अङ्गेषु । विभक्तिविपरिणामः । विषकन्दलीसन्निभः इति सर्वत्र योज्यम् । अभिनवपल्लवाः दृष्ट्योर्विषसन्निभाः । कलकण्ठीरुतं कर्णयोर्विषकन्दलीसन्निभं विरहात् । विरह- प्राणिनां दुःखकारणं भवतीत्यर्थः । 5 ) एक्कुत्यत्र यदि एकोऽपि प्रसारयति द्विजपतिः करं ततोऽपि मुकुलयति शतपत्रम् । निरारिउँ निश्चितम् । आउल[उ]ँ इति आकुलम् । हे प्रभो तव पुनः करसरसीरुहं हस्तकमलं द्विजपतिलक्षेऽपि दृष्टे स्फुटं प्रकटं अनर्गलं यथा भवति तथा विकसति । एकदा द्विजपतिश्चन्द्रोऽन्यदा ब्राह्मणवराः ।

१ उन्हय K. २ सुहाई D. ३ किंचिवि ABP. ४ पसीअहि A. ५ लछिय BP. ६ किरि B. ७ पेच्छिअहि BP. ८ भुअदंड A. ९ कोअंड A. १० पिओ BO, पिउ dropped in A. ११ एकंगिण A. १२ कलकंठीरुउ B. १३ कण्णिहि BP; कण्णहि DN. १४ कंदल॰ A. १५ मुद्धहि BP3 १६ एक्कु BP3. १७ सिम-यइ D. १८ निरारिओ CN; निरारिउ BP; निरालउ K. १९ आओलेउं N. २० तुहुं P. २१ अणग्गलउं K. २१ एक्को॰

**च्लतावतिदीर्घे ढजैः ॥ ५५ ॥**

चतुर्मात्रनवकं त्रिमात्रश्चातिदीर्घम् । ढजैरिति चतुर्दशभिरष्टभिश्च यतिः ।

यथा–

"जइ जाहिं सुरसरिअ जइ गिरिनिज्झर सेवहिँ जइ पइसहि काणणतरुसंडय ।
रिउ निय तुवि नवि छुट्टहिं पहु तुज्झु पयावहु कालहु अइदीहर भुअदंडय ॥५५.१॥

**पाचूता मत्तमातङ्गविजृम्भितम् ॥ ५६ ॥**

ढजैरिति वर्त्तते । षण्मात्रद्वयं चतुर्मात्रषट्कं त्रिमात्रश्च मत्तमातङ्गविजृम्भितम् ।

यथा–

"पयडिअलंछणमयलेहिण उल्लासिअकरदंडिण ताराहरणिण निसिअरिण ।
उंअ नीसंकिण भउ विरहिणिजणहु जणिज्जइ असमु मत्तमायंगविअंभिइण ॥५६.१॥

**चत्वारिंशत्कला एकद्व्यधिका वा मालाध्रुवकम् ॥ ५७ ॥**

चत्वारिंशन्मात्रा यद्वा एकद्व्यधिका इति एकचत्वारिंशद् द्विचत्वारिंशद्वा माला-ध्रुवकं नाम द्विपदी । यथा–

"तुह पुहईसरसेहर किंत्ति अकित्तिम सुरहिअदिसिमुह जाम्वहिं सग्गि पइट्ठिअ ।
ताम्वहिं तक्खणि सुरसुंदरिलोअहुं सुरतरुकुसुममाल ध्रुवुं हुअ मणउव्विट्ठिअ ॥ ५७.१ ॥

एवमेकद्व्यधिकयोरप्युदाहार्यम् । एवं द्विपदीध्रुवा चतुःषष्टिः ॥ ५७.१ ॥

अयं चात्र विवेकः–

सिंहावलोकितार्येषु विज्ञप्तौ संविधानके ।
मङ्गले ये ध्रुवा प्रोक्ता द्विपद्यस्त्वत्र कीर्त्यते ॥ ५७.२ ॥ इति ॥

---

1) तुहेत्यत्र तव हे पृथ्वीश्वरशेखर कीर्तिरकृत्रिमा सुरभितदिङ्मुखा यावत्स्वर्गे प्रतिष्ठिता तावत्क्षणे सुरसुन्दरीलोकस्य सुरतरुकुसुममाला ध्रुवं संजाता मनोऽप्रिया मनउद्वेगकरीत्यर्थः । 2) जइंत्यत्र हे अतिदीर्घ-भुजदण्ड यद्यपि हे नृपवर तव वैरिणः सुरसरितं गङ्गां प्रतियान्ति यदि च गिरिनिर्झराणि सेवन्ते यदि कान्तार-तरुषण्डेषु प्रविशन्ति तथापि काल इव कालात्तव प्रतापात्र च्युत्यन्ति । 3) पयडियेत्यत्र पश्य । निशाकरेण विरहिणीजनस्य असमं भयं जन्यते । कथंभूतेन मत्तमातङ्गवद्विजृम्भितं यस्य स तेन । प्रकटिता लाञ्छनमेव मदलेखा येन सः [तेन] । उल्लासितकरदण्डेन । तारा एवाभरणानि यस्य स तथा [तेन] । मत्तमातङ्गोऽपि मदलेखां प्रकटयति, करदण्डमुल्लासयति, ताराणि दीप्राणि आभरणानि धत्ते बिभर्ति ।

---

१ सेवइ S; सेवहिं D. २ तुज्झ ACP. ३ अइदीहिर- N. ४ पडिरय A. ५ उभ S. ६ वियभिइण A; विअभिइअ C, विअंभिइय BP. ७ तह DN. ८ कित्तिय कित्तिय A. ९ लोअह P; लोअहं B. १० धुव S. ११ उव्विट्ठिय N. १२ व ANS. १३ द्विपदान्यत्र N.

प्रकारान्तरेण द्विपदीराह ।

**चो विजया ॥ ५८ ॥**

एकश्चतुर्मात्रः पादे चेद्विजया नाम द्विपदी । यथा—

[1]सजया, विजया ॥ ५८.१ ॥

**पो रेवका ॥ ५९ ॥**

पञ्चमात्रो रेवका ।

[2]बहुवया, रेवया ॥ ५९.१ ॥

**पो गणद्विपदी ॥ ६० ॥**

षण्मात्रो गणद्विपदी । यथा—

[3]निअ जुवई, गणदु वई ॥ ६०.१ ॥

**चतौ स्वरद्विपदी ॥ ६१ ॥**

चतुर्मात्रत्रिमात्रौ स्वरद्विपदी । यथा—

[4]पसरदु वेई, अखलिअगई ॥ ६१.१ ॥

**पदावप्सराः ॥ ६२ ॥**

पञ्चमात्रद्विमात्रौ अप्सराः । यथा—

[5]उअ अच्छरा, गयमच्छरा ॥ ६२.१ ॥

**अष्टौ कला वसुद्विपदी ॥ ६३ ॥**

यथा—

[6]सु तव सुदु वई, जयेइ नरवई ॥ ६३.१ ॥

**चौ करिमकरभुजा ॥ ६४ ॥**

चतुर्मात्रद्वयं करिमकरभुजा । यथा—

[7]करिमयरभुओ, उव्वहुअभुओ ॥ ६४.१ ॥

1) अथ प्रकारान्तरेण द्विपदीराहेत्यत्र सजया विजयेत्यत्र सजया जयवती विजयादेवी । 2) बहुवया रेवया इत्यत्र बहुवका बहुरवा वा रेवया रेवानदी । 3) निअजुवेत्यत्र निजयुवतिं पतिर्गणयतु मानपरित्यर्थः । 4) पसरेत्यत्र प्रसरतु पतिः अस्खलितगतिः । 5) उअ एत्यत्र पश्य अप्सरसो गतमत्सराः सन्ति । 6) सु तवेत्यत्र । स तव सुतो निजुतः पतिः । यो जयति नरपतिः । 7) करिमेत्यत्र करिमकरभुज उ(ओ)द्वहुभुजः ।

१ These three words are dropped in P. २ पई B, पइ P. ३ उअवच्छरा A. ४ The line is dropped in D.

चलदलाश्चन्द्रलेखा ॥ ६५ ॥

चतुर्मात्रो लघुर्द्विमात्रो लघुश्च चन्द्रलेखा । यथा –

[1]नवचंदलेह, जिम्वं[1] मुद्ध एह ॥ ६५.१ ॥

पतौ मदनविलसिता ॥ ६६ ॥

पञ्चमात्रस्त्रिमात्रश्च मदनविलसिता । यथा –

[2]मयणविलसिअं, पावववसिअं ॥ ६६.१ ॥

चपौ जम्भेट्टिका ॥ ६७ ॥

चतुर्मात्रपञ्चमात्रौ जम्भेट्टिका[2] । यथा –

[3]सा तसु चेट्टिआ[3], सुद्धु[4] जं भेट्टिआ[5] ॥ ६७.१ ॥

पचौ लवली ॥ ६८ ॥

पञ्चमात्रचतुर्मात्रौ लवली । यथा –

[4]उअ वणावलिआ, फुल्लिअलवलिआ ॥ ६८.१ ॥

सप्त कला दलौ चामरपुरसुन्दरी ॥ ६९ ॥

आदौ सप्तकलास्ततो द्विमात्रो लघुश्चामरपुरसुन्दरी । यथा –

[5]अमरपुरसुंदरिहिं, भड वरिअ सयंवरिहिं ॥ ६९.१ ॥

पचौ काञ्चनलेखा ॥ ७० ॥

षण्मात्रचतुर्मात्रौ काञ्चनलेखा । यथा –

[6]मणिकंचणरेहिअ, सुरसुंदरि जेहिअ[6] ॥ ७०.१ ॥

पौ चारुः ॥ ७१ ॥

द्वौ पञ्चमात्रौ चारुः । यथा –

[7]चारुचंपयरुई, उअ सोहइ[7] जुअई[8] ॥ ७१.१ ॥

तपताः पुष्पमाला ॥ ७२ ॥

त्रिमात्रषण्मात्रत्रिमात्राः पुष्पमाला । यथा –

---

1) नवेत्यत्र मुग्धा राजते इति क्रियारोपः । यथा नूतनचन्द्रलेखेह । 2) मयणेत्यत्र मदनविलसितं पापव्यवसितम् । 3) सा तेत्यत्र सा तस्याः चेटी सुष्ठु मेटिका यत् । 4) उअ चेत्यत्र पश्य वनावली पुष्पितलवलिका । 5) अमरेत्यत्र अमरपुरसुन्दरीभिः भटाः वृताः स्वयंवरे । 6) मणीत्यत्र मणिकाञ्चनराजिता सुरसुन्दरी यथा । 7) चार्वीत्यत्र चारु युवतिः शोभते । त्वं पश्य । [चम्पकरुचिः] ।

---

१ जिम C. २ जंभेदिका N. ३ चेट्टिआ N; चेठिआ A. ४ सुद्दु BKB. ५ मेट्टिआ N. ६ ओ AD. ७ सोहइ A. ८ जुवई A.

[1]एह ललिअदेह बाल । नाइ जाइफुल्लमाल[1] ॥ ७२.१ ॥

तोमरमित्यन्ये ॥ ७२.१ ॥

एवमन्या अपि त्रिंशन्मात्रापर्यन्ता अभ्यूह्याः । अप्रसिद्धाभिधानत्वात्तु नोक्ताः ।

यदाह—

चतुर्मात्रादिकैस्त्रिंशदान्तैरंह्रियुगैः पुनः ।
एकानेकैरन्त्यवर्णैर्यमके द्विपदीं विदुः ॥ ७२.२ ॥[1]

द्विपदीप्रकरणम् ॥

**गाथात्रानुक्तम् ॥ ७३ ॥**

अत्र शास्त्रे यन्नोक्तं छन्दस्तद् गाथासंज्ञम् ॥ यथा—

दश धर्मं न जानन्ति धृतराष्ट्र निबोधनात्[2] ।
मत्तः प्रमत्त उन्मत्तः क्रुद्धः श्रान्तो बुभुक्षितः ॥
त्वरमाणश्च भीरुश्च लुब्धः कामीति ते दश ॥ ७३.१ ॥

अत्र त्रिभिः षड्भिर्वा पादैः श्लोकः ॥ ७३.१ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञच्छन्दोऽनुशासनवृत्तौ
द्विपदीव्यावर्णनो नाम सप्तमोऽध्यायः ॥

ग्रं० १९७; उ० २८०३ ।

* *
*

1 ) एहेत्यत्र एषा ललितदेहा बाला भाषते जातिपुष्पमालेव ।
सप्तमोऽध्यायः सम्पूर्णः ।

१ [ पुष्पमाल A. २ निबोध तान् P; निबोधि तान् B.

# अथ अष्टमोऽध्यायः ।

**अथ प्रस्तारादयः षट् प्रत्ययाः ॥ १ ॥**

प्रस्तार्यत इति प्रस्तारो वृत्तानां विस्तरतो विन्यासः । स आदिर्येषां प्रत्ययानां ते प्रस्तारादयः । प्रतीतिजननात्प्रत्ययास्तेऽधिक्रियन्ते । ते च षट् । यदाहुः—

> प्रस्तारो नष्टमुद्दिष्टं सर्वैकादिगलक्रिया[1] ।
> संख्या चैवाध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥ १.१ ॥

तत्र प्रस्तारमाह—

**प्राकल्पाद्यगोऽधो लः परस्तुपरिसमं प्राक्**
**पूर्वविधिरिति समयभेदकृद्वर्जं प्रस्तारः ॥ २ ॥**

तत्रायं क्रमः । पादे अर्धे छन्दसि वा यावन्तो वर्णास्तावन्तो गुरवः प्रथमविकल्पे स्थाप्याः । यथा—समवृत्तस्य त्र्यक्षरे पादे गुरुत्रयं ऽ ऽ ऽ; ततोऽस्य प्राकल्पस्याद्यो यो गुरुस्तस्याधो लघुः स्थाप्यः । ततः परस्तुपरिसमं स्थाप्यम् । यत्रोपरि गुरुस्तत्राधस्तादपि गुरुः यत्रोपरि लघुस्तत्राधस्तादपि लघुः । यथा— ऽ ऽ ऽ, । ऽ ऽ; पुनः प्राकल्पाद्यगुरोरधो लघुः स्थाप्यः । परस्तुपरिसममिति वचनात् ततः परं गुरुः स्थाप्यः । ततः स्थापितलघोः प्राक् पृष्ठे पूर्वविधिरिति पूर्वस्य प्रथमविकल्पस्य सर्वगुरोर्विधिर्विधानम् । प्रथमविकल्पे यो वर्णः स चेह गुरुरेव । यथा— ऽ ऽ ऽ, । ऽ ऽ, ऽ । ऽ, एवं सर्वलघुविकल्पं यावदयं विधिः करणीयः । यथा— ऽ ऽ ऽ, । ऽ ऽ, ऽ । ऽ, । । ऽ, ऽ ऽ ।, । ऽ ।, ऽ । ।, । । ।. समयभेदकृद्वर्जमिति-समयोऽभ्युपगमस्तद्भेदकारी विकल्पः[2] प्रस्तारक्रमायातोऽपि वर्जनीयः । संख्यायां न गणनीय इत्यर्थः । अस्य चार्धसमादावुपयोगः ॥ २ ॥

इति समवृत्तप्रस्तारः ।

अर्धसमप्रस्तारे त्वर्धस्य प्रस्तारः कार्यः । यथा—द्व्यक्षरपादद्वयस्य सर्वगुरोः ऽ ऽ; ऽ ऽ, आद्यगुरोरधो लघुः । ततः परस्तुपरिसममिति परतो गुरुत्रयं स्थाप्यम् । ऽ; ऽ ऽ, पुनः प्राकल्पाद्यगोऽधो ल इति प्रथमपादद्वितीयगुर्वक्षरस्याधो लघुः । परतस्तु परस्तुपरिसममिति गुरुद्वयम् । ततः प्राक्पूर्वविधिरित्यादौ गुरुः स्थाप्यः ऽ ।; ऽ ऽ, अनया रीत्या सर्वलघुं यावत् षोडश भेदाः—

अथ अष्टमोऽध्यायः

1) सर्वैकादीत्यत्र एक आदौ येषां ते एकादयः ते च ते गलाश्च एकादिगलाः सर्वे च ते गलाश्च तेषां क्रिया । 2) तद्भेदकारी विकल्पेत्यत्र अर्धसमादीनां यः प्रस्तुतः प्रस्तारः तस्य वैतत्साद्दश्यापादकः ।

१ ततोऽन्यस्य D. २ पृष्ठे ABCDP. ३ The following table is dropped in K.

| | | | |
|---|---|---|---|
| SSSS | SS\|S | SSS\| | SS\|\| |
| \|SSS | \|S\|S | \|SS\| | \|S\|\| |
| S\|SS | S\|\|S | S\|S\| | S\|\|\| |
| \|\|SS | \|\|\|S | \|\|S\| | \|\|\|\| |

एषु प्रथम-षष्ठ-एकादश-षोडशाः समवृत्तभेदत्वेन अभ्युपगतार्धसमवृत्तभेदकारित्वाद्वर्जनीयाः । ततः शेषाः द्वादश शुद्धार्धसमभेदाः । विषमप्रस्तारे तु पादचतुष्टयस्य प्रस्तारः कार्यः । यथा—द्व्यक्षरपादचतुष्टयस्य सर्वगुरोः (SS SS SS SS) प्राक्लपाद्यगोऽधो ल इत्याद्यगुरोरधो लघुः स्थाप्यः । ततः परमुपरिसममिति परतो गुरुसप्तकं स्थाप्यम् (\|SSSSSSS) । पुनः प्रथमपादद्वितीयगुर्वक्षरस्याधो लघुः परमुपरिसममिति परतो गुरुषट्कम् । ततः प्राक् पूर्वविधिरित्यादौ गुरुः स्थाप्यः (S\|SS SS SS) । अनया रीत्या सर्वलघुं यावत् षट्पञ्चाशदधिकं शतद्वयं भेदाः । तेषां मध्यात् समार्धसमरूपत्वेन अभ्युपगतविषमप्रस्तारभेदकारित्वात् [1]प्रथमो, द्वितीयात्सप्तदशः सप्तदशः, अन्त्यभेदं यावद्वर्जनीयः । ते च समुदिताः षोडश । तद्यथा—

स्थापना चेयम् ।

| | | | | | |
|---|---|---|---|---|---|
| SSSS | SSSS | १ | SSS\| | SSS\| | १३७ |
| \|SSS. | \|SSS | १८ | \|SS\| | \|SS\| | १५४ |
| S\|SS | S\|SS | ३५ | S\|S\| | S\|S\| | १७१ |
| \|\|SS | \|\|SS | ५२ | \|\|S\| | \|\|S\| | १८८ |
| SS\|S | SS\|S | ६९ | SS\|\| | SS\|\| | २०५ |
| \|S\|S | \|S\|S | ८६ | \|S\|\| | \|S\|\| | २२२ |
| S\|\|S | S\|\|S | १०३ | S\|\|\| | S\|\|\| | २३९ |
| \|\|\|S | \|\|\|S | १२० | \|\|\|\| | \|\|\|\| | २५५ |

[2]अमीषां मध्ये प्रथमषष्ठैकादशषोडशाः समभेदाः । अन्ये अर्धसमभेदाः ।

1) प्रथमो द्वितीयेत्यत्र प्रथमः त्याज्यः । द्वितीयादारभ्य सप्तदशः त्याज्यः । स तु प्रथमापेक्षया अष्टादशः स्यात् । ततोऽपि सप्तदशः त्याज्य इति भावार्थः । 2) अमीषां मध्ये प्रथमेत्यत्र अमीषां मध्ये प्रथमषष्ठैकादशषोडशाः समभेदाः । शेषा द्वादशभेदा द्व्यक्षरपादस्यार्धसमस्य पादचतुष्टयत्वेन अभ्युपगताः । अथ यदि द्व्यक्षरपादस्य विषमस्य पादचतुष्टये प्रसृते चतुरक्षरपादस्य समस्यैव पादद्वयत्वेन एकैको भेदोऽभ्युपगम्यते तदा एते षोडशापि समवृत्तभेदा भवन्ति । तेषां मध्ये चतुरक्षरपादस्यार्धसमस्य यदि पादद्वयत्वेनैकैको भेदोऽभ्युपगम्य पृथक् क्रियते तदा भेदा बहवो निःसरन्ति । ततो द्व्यक्षरविषमप्रस्तारे समार्धसमयोरपि द्व्यक्षमेव पादचतुष्टयं गणनीयम् । न तु पूर्वोक्तया चतुरक्षरं पादद्वयं गणनीयम् एवं तुल्यं सर्वत्र ।

१ शु॰ समवृत्तभेदाः A. २ विषमविस्तारे B. ३ The word is dropped in BP. ४ षादशस्सप्तदश. BP. ५ The two words are dropped in DX.

अथ जातिष्वार्यायाः प्रस्तारो यथा–

प्रथमस्ये गणस्य द्विगुरोः (ऽऽ) आद्यस्य गुरोरधो लघुः स्थाप्यः । ततः परमुपरिसममिति परगुरुसहितद्वितीयादिगणानामधो गुरवः स्थाप्याः । प्राक्पूर्वविधिरिति यावत्यः प्रथमगणे मात्रास्तावत्यो गुरुलघुक्रमेण पूरणीयाः । ततश्चतुर्मात्रत्वात्पूर्वगणस्य एका मात्रा प्राॅक् न्यसनीया । तेन द्वितीयभेदे प्रथमगणो गुर्वन्तः (।।ऽ), अन्ये तु गुर्वात्मकाः । पुनराद्यगुरोरधो लघुस्ततः परमुपरिसममिति अन्ये गणा गुर्वात्मकाः । प्राक्पूर्वविधिरिति मात्रात्रये प्रथमगणसंबन्धिन्यवशिष्टे यदि लघुपूर्वो गुरुर्दीयते तदा नौजे जः इति वचनात् समयभेदः स्यात् । ततो गुरुपूर्वो लघुर्दीयते इति तृतीयभेदे गुर्वादिः (ऽ।।) प्रथमो गणः । शेषाश्च तथैव[1] । पुनराद्यगुरोरधो लघुस्ततः परमुपरिसममिति द्वौ लघू शेषाश्च गणा गुर्वात्मकाः । प्राक्पूर्वविधिरिति एका मात्रा प्रथमगणे अवशिष्यते । सा प्राक् न्यस्येति चतुर्थे भेदे सर्वलघुः प्रथमो गणः (।।।।), शेषाश्च तथैव । पुनर्द्वितीयगणप्रथमगुरोरधो लघुः । ततः परमुपरिसममिति द्वितीयगणाद्वितीयगुरुत आरम्य सर्वे गुरवः । प्राक् पूर्वविधिरिति यदि लघुपूर्वं गुरुद्वयं दीयते तदा गणनाशात्समयभेदः स्यात् । तदेतन्मा भूदिति द्वितीयगणापेक्षयैव द्वितीयगणलघोः पूर्वो लघुर्देयः । [2]प्रथमश्च गणः सर्वगुरुरिति पूर्वविधिना गुर्वात्मक इति द्विगुरुर्गुर्वन्तश्च पञ्चमे भेदे प्रथमद्वितीयौ गणौ । ततः षष्ठसप्तमाष्टमेषु भेदेषु क्रमेण द्वितीयतृतीयचतुर्थभेदतुल्यः प्रथमो गणो द्वितीयश्च गुर्वन्त एव । ततो नवमे भेदे द्वितीयगणगुरोरधो लघुः । ततः प्राक्पूर्वविधिरिति लघुपूर्वो गुरुः प्राग् देयः । तेन जगणस्तत्र संपन्नः । [3]प्रथमश्च गुर्वात्मकः । उपरितुल्यत्वं पुनः [4]परेषां स्थितमेव । यावद्विंशतितमे भेदे गणद्वयं लघुरूपं संपन्नमिति [5]द्वितीयो गणो विंशत्या निष्ठितः । तृतीयगणः [6]चतुर्भेदः एकैको [7]विंशतिकृत्वोऽशीत्या निष्ठितः । चतुर्थगणः [8]पञ्चभेदः एकैकोऽशीतिकृत्वः चतुःशत्या निष्ठितः । पञ्चमगणश्चतुर्भेदः एकैकः चतुःशतीकृत्वः षोडशशत्या निष्ठितः । षष्ठगणो द्विभेदः एकैकः षोडशशतीकृत्वो

1) तथैव पुनरित्यत्र यथाक्रम न्यस्ता गुर्वात्मका अन्ये इति । 2) प्रथमश्च गणेत्यत्र गणस्य चतुर्मात्रिकत्वया नाशो गणनाशः । तथा हि यदि पूर्वं गुरुद्वयं दीयते तदा प्रथमो गणस्त्रिमात्रो द्वितीयः पञ्चमात्रः प्रथमस्त्रिमात्रो वा स्यात् । गणस्तु चतुर्मात्र एव स्थाप्य इति समयः । 3) प्रथम पाश्चात्यः 4) परेषां स्थितेत्यत्र अग्रेतनानाम् । तथाविधमेव सर्वगुरुरूपम् । 5) चतुर्भेद इत्यत्र जगणरहितत्वात् । 6) विंशतिकृत्वो इत्यत्र विंशतिश्चतुर्भिर्गुणिताशीतिः । 7) पञ्चभेदेत्यत्र जगणसहितत्वात् ।

१ प्रथमगणस्य BP. २ आद्यगुरो॰ A ३ अनेका मात्रा O; अनेकमात्रा BP. ४ प्राक् dropped in A. ५ प्रथमो गणो ABCP. ६ गुर्वादि AN ७ अवशेष्यते AO. ८ सा च BP. ९ चतुर्भेदे N, चतुर्थभेदे O. १० द्वितीयगण dropped in A. ११ लघुपूर्वोकगुरु A. १२ गणद्वयलघु॰ O. १३ द्वितीयगणो O. १४ अशीत्या P. १५ चतुर्थगणपञ्चभेद एकैकोशीतिकृत्व A.

द्वात्रिंशच्छत्या निष्ठितः । सप्तमगणश्चतुर्भेदः एकैको द्वात्रिंशच्छतीकृत्वो द्वादशभिः सहस्रैः अष्टशत्युत्तरैर्निष्ठितः । अन्त्यो गुरुरेक एव । एकेन गुणितं तदेवेति तावद्भिरेव निष्ठितः । एवं निश्चितं पूर्वार्धम् । परार्धमपि गणविकल्पान्निश्चित्य प्रस्तारयेत् । एवमन्येष्वपि मात्राछन्दःसु प्रस्तारो ज्ञेयः इति ॥ २ ॥

समवृत्तानां प्रकारान्तरेण प्रस्तारमाह–

ग्लावधोऽधो द्विर्द्विरतः ॥ ३ ॥

समवृत्तानां प्रस्तारे चिकीर्षिते प्रथमपङ्क्तौ यावत्संख्यापरिमाणमेकान्तरितावधोऽधो गुरुलघू स्थाप्यौ । अतः परं द्वितीयादिपङ्क्तिषु द्विगुणद्विगुणा गुरवो लघवश्च अधोऽधः स्थाप्याः । यथा–त्र्यक्षरे छन्दसि प्रथमपङ्क्तौ एकान्तरिताः गुरुलघवः अष्टसंख्या यावत् स्थाप्याः । द्वितीयपङ्क्तौ द्वौ द्वौ । तृतीयपङ्क्तौ चत्वारश्चत्वारः ।

इति प्रस्तार उक्तः ॥ ३ ॥

समवृत्तानां नष्टमाह–

नष्टेऽङ्कस्य दले लः सैकस्य गः ॥ ४ ॥

किंचिद्वृत्तं नष्टं चतुर्थं पञ्चमं वा । तत् समं यदि भवति तदा दलेऽर्धे कृते ल इति लघुर्लभ्यते । पुनर्दले लघवो लभ्यन्ते । अथ वैषम्यात् संख्या अर्धं न ददाति तदा सैकस्य गः इति सैकस्याङ्कस्य दले कृते गुरुर्लभ्यते । पुनस्तथेति नष्टवृत्तमुत्पद्यते । यथा–अत्रैव त्र्यक्षरे छन्दसि पञ्चमं वृत्तं नष्टम् । पञ्च अर्धं न ददतीति सैकाः षट् तदर्धे गुरुः । पुनस्त्रयोऽर्धं न ददति । सैकाश्चत्वारः तदर्धे गुरुः । द्वयोरर्धमेकः इति लघुरिति द्वौ गावेको लः ईदृशं पञ्चमं वृत्तं ( ऽऽ। ) इति ॥ ४ ॥

समवृत्तनष्टविधिरुक्तः । जातीनां नष्टविधिरुच्यते–

नष्टाङ्के गणैर्हृते शेषसंख्यो गणो देयो
राशिशेषे लब्धं सैकम् ॥ ५ ॥

नष्टस्य वृत्तस्याङ्के स्थापिते गणैर्गणविकल्पैर्हृते यच्छेषं तत्संख्यो गणो देयः । यत्र तु राशिशेषं भवति तत्र लब्धं सैकं कार्यम् । ततः पुनस्तस्मिन्नुत्तरगणविकल्पैर्हृते शेषसंख्यो गणो देयः । यथा–आर्याप्रस्तारे एका कोटिरेकविंशतिर्लक्षाः एकविंशतिः सहस्राः द्वे शते द्वादशोत्तरे इत्येतावत्संख्यं वृत्तं नष्टं कीदृशमिति पृष्टे प्रथमगणश्चतुर्विकल्प इति चतुर्भिर्नष्टाङ्कं हरेत् । लब्धं त्रिंशल्लक्षास्त्रिंशत्सहस्राण्यशीतिः शतानि त्र्युत्तराणि शेषं चत्वारि[1]

1 ) शेषं चत्वारीत्यत्र भ्रम नष्टाङ्कराशेर्निर्लेपो जातः । परन्तु चतुर्भिर्भागो हृतः । ततः शेषं चत्वारि ।

१ नष्टाङ्कस्य N    २ पुनस्तद्वत् N    ३ उत्पद्यते C    ४ सैका N, सैकाः A    ५ त्रयार्धं N
६ ददाति B    ७ हृतशेष० N    ८ राशिष A    ९ गण dropped in A    १० चतुर्थस्व० N
११ छन्दो०

इति तद्विकल्पेषु चतुर्थं सर्वलघुं न्यसेत् (।।।।।)। द्वितीयो गणः पञ्चविकल्प इति पञ्चभिर्हरेत् । लब्धं षट् लक्षाः षट् सहस्राः षष्ट्यधिकाः । राशेश्च हृताः शेषं त्रीणि इति तद्गणविकल्पेषु तृतीयं मध्यगुरुं न्यसेत् । ततो राशिशेषं लब्धं सैकं इति वचनाल्लब्धं सैकं कृत्वा तृतीयगणश्चतुर्विकल्प इति चतुर्भिर्हरेत् । लब्धमेकं लक्षमेकपञ्चाशत्सहस्राः पञ्चशतानि पञ्चदशोत्तराणि । राशिशेषमेक इति तद्विकल्पेषु प्रथमं सर्वगुरुं न्यसेत् । लब्धं सैकं कृत्वा चतुर्थगणस्य पञ्चविकल्पत्वात् पञ्चभिर्हरेत् । लब्धं त्रिंशत्सहस्राः त्रीणि शतानि त्र्युत्तराणि । राशिशेषमेक इति प्रथमविकल्पं सर्वगुरुं न्यसेत् । ततो लब्धं सैकं कृत्वा पञ्चमगणस्य चतुर्विकल्पत्वात् चतुर्भिर्हरेत् । लब्धं पञ्चसप्ततिः शतानि षट् सप्तत्यधिकानि । शेषं चत्वारीति चतुर्थविकल्पं सर्वलघुं न्यसेत् । ततः षष्ठस्य द्विविकल्पत्वात् द्वाभ्यां हरेत् । लब्धं सप्तत्रिंशच्छतानि अष्टाशीत्यधिकानि । शेषं द्वे इति द्वितीयविकल्पं सर्वलघुं न्यसेत् । ततः सप्तमगणस्य चतुर्विकल्पत्वाच्चतुर्भिर्हरेत् । लब्धं नव शतानि सप्तचत्वारिंशदधिकानि । शेषं चत्वारीति चतुर्थविकल्पं सर्वलघुं न्यसेत् । अन्ते नित्यविन्यासं गुरुं न्यसेत् । ततः सप्तमगणाल्लब्धं परार्धादिगणस्य चतुर्विकल्पत्वाच्चतुर्भिर्हरेत् । लब्धं द्वे शते षट्त्रिंशदधिके । राशिशेषं त्रीणीति तृतीयविकल्पमादिगुरुं न्यसेत् । ततो लब्धं सैकं कृत्वा द्वितीयगणस्य पञ्चविकल्पत्वात् पञ्चभिर्हरेत् । लब्धं सप्तचत्वारिंशत् । राशिशेषं द्वे इति द्वितीयविकल्पमन्तगुरुं न्यसेत् । ततो लब्धं सैकं कृत्वा तृतीयगणस्य चतुर्विकल्पत्वाच्चतुर्भिर्हरेत् । लब्धं द्वादश । शेषं चत्वारीति चतुर्थविकल्पं सर्वलघुं न्यसेत् । ततश्चतुर्थगणस्य पञ्चविकल्पत्वात्पञ्चभिर्हरेत् । लब्धं द्वे । राशिशेषं द्वे इति द्वितीयविकल्पमन्तगुरुं न्यसेत् । ततो लब्धं सैकं कृत्वा पञ्चमगणस्य चतुर्विकल्पत्वाच्चतुर्भिर्हरेत् । लब्धं शून्यम् । राशिशेषं त्रीणीति तृतीयविकल्पमादिगुरुं न्यसेत् । षष्ठो नित्यविन्यासो लघुरेव । ततो लब्धं सैकं कृत्वा सप्तमगणस्य चतुर्विकल्पत्वाच्चतुर्भिर्हरेत् । लब्धं शून्यम् । शेषमेकमिति प्रथमविकल्पं सर्वगुरुं न्यसेत् । अन्ते नित्यविन्यासो गुरुरेव । स्थापना यथा– ।।।।, ।ऽ।, ऽऽ, ऽऽ, ।।।।, ।।।।, ।।।।, ऽ; ऽ।।, ।।ऽ, ।।।।, ।।ऽ, ऽ।।, ।, ऽऽ, ऽ. १२१२१२१२ संख्यतमैषा आर्या ।

यदाह–

नष्टाङ्के प्रथमं भक्ते गणाङ्कैश्चतुरादिभिः[8] ।
शेषसंख्यो गणो देयो लब्धं कुर्यात्सरूपकम् ॥ ५.१ ॥
पुनर्भजेत्पुनर्लब्धं सरूपं शेषसंख्यया ।
गणान्दद्याद्धृते शेषे गाथायाः प्राग्गणक्रमः ॥ ५.२ ॥

एवमन्येष्वपि मात्राच्छन्दःसु नष्टविधिर्ज्ञेयः । इति नष्टानयनम् ॥ ५.२ ॥

---

१ चत्वारि A. २ हृतशेषं AD; हृतशेषत्रीणि C. ३ लब्धं dropped in D. ४ चतुर्विकल्पं A. ५ चतुर्विकल्पं AC. ६ षड्भेदत्वात् ABD. ७ स्थापना to आर्या dropped in ABP. ८ चतुरादिकैः DP.

अथोद्दिष्टस्य संख्यापरिज्ञानार्थमाह—

उद्दिष्टेऽन्त्याल्लाद् द्विर्गेकं[1] त्यजेत् ॥ ६ ॥

केनचित्प्रस्तारोक्ते वृत्ते कतिथमित्युद्दिष्टे यथा—(ऽऽ।)[2] एवं गलेषु स्थापितेषु अन्त्याल्लादारभ्य अर्थात् [1]पश्चानुपूर्व्या अधो द्विरिति द्विगुणोऽङ्कः कार्यः। ग् चेदेकं त्यजेत्। गुरोरधो द्विगुण एकोनः कार्यः। अयमर्थः—अन्त्यस्य लस्याधो योऽङ्कस्तं द्विगुणयेत्[3]। स च निराकाराया आवृत्तेरसंभवात्प्रथमातिक्रमे कारणाभावादेक एव परिशिष्टो द्विगुणीकृतो द्विको जातस्ततस्तस्मादपनीय तत्पूर्वस्य[4] गुरोरधो निधाय द्विगुणीकृतश्चतुष्कः। स एकोनः कृतस्त्रिकः। पुनस्तत्पूर्वस्य गुरोरधो निधाय द्विगुणीकृतः[5] षट्कः[6]। स एकोनः कृतः[7] पञ्चकः। तदीदृशं पञ्चमं वृत्तमिति ॥ ६ ॥

अथ जातीनामुद्दिष्टमाह—

आद्यमन्त्येन हतं त्यधस्तनम् ॥ ७ ॥

स जयति कुमारपालः श्रीमालवनिपतिप्रणतविनुतचरणः।
निर्मलयशसा धवलितभुवनश्चक्रधरतुल्यौजाः ॥ ७.१ ॥

केनचिदियमार्या कतिथीति पृष्टे अस्या गणान्संस्थाप्य तदधश्चतुःपञ्चादिकां विकल्पसंख्यां यथासंभवं लिखेत्। ततो गणितक्रमेण आद्यमन्त्येन[8] हत्वा त्यधस्तनमिति तत्र दृष्टविकल्पादधस्तनान् विकल्पान् राशेर्व्यपोह्य[2] संख्यां लब्धामेतावतिथं वृत्तमिति निर्दिशेत्[9]। कथम्। अन्ते न्यस्तस्य अर्धगणस्य[3] अविकल्पत्वात् एकमङ्कमधो[10] निधाय सप्तमगणस्य चतुर्विकल्पत्वाच्चतुर्भिर्हन्यात्। जातानि चत्वारि। इह दृष्टः सर्वगुरुः। तस्याधस्तनान् अन्तगुरु-आदिगुरु-सर्वलघून् त्रीन् अस्माद्राशेः पातयेत्। शेषमेकम्। षष्ठश्चाविकल्पः। [4]पञ्चमे चतुर्भिर्हते अधस्तने चैकस्मिन्सर्वलघौ त्यक्ते त्रीणि। चतुर्थे पञ्चभिर्हतेषु पञ्चदश। [5]अधस्तनेषु त्रिषु त्यक्तेषु द्वादश। तृतीये[11] चतुर्भिर्हतेषु अष्टचत्वारिंशत्। त्याज्यं नास्ति। द्वितीये[12] पञ्चभिर्हतेषु त्रिषु त्यक्तेषु द्वे शते सप्तत्रिंशदधिके। प्रथमे

1) पश्चानुपूर्व्या अधो द्विरित्यत्र लयोः प्रान्त्यस्तन्त्रिधमोऽधो द्विगुणः। यदा प्रान्ते गुरुर्भवति तदा द्विगुणं भङ्क कृत्वा एक पातयेत्। 2) व्यपोह्य अपनीय। 3) अर्धगणेत्यत्र अर्धगणं हि एकगुरुत्वात्। 4) पञ्चमे चतुर्भिर्हते अधस्तने दले पञ्चमे स्थाने यश्चतुर्लक्षणोऽङ्कः स एकेन अवशिष्यताङ्केन गुण्य। जाताश्चत्वारः। तदनन्तरमत्र पञ्चमे स्थाने सर्वलघुः पाश्चात्यो गणोऽस्ति अतः प्रान्त्योऽस्यामे स्थितः सर्वलघुसपन्थी चतुर्णां मध्ये निष्काशनीय। अवशिष्टास्त्रयः। 5) अधस्तनेषु इत्यत्र अत्र प्रान्तगुरुरस्ति अतो गणसपन्धि भङ्कत्रयं पातयेत्।

१ द्विर्गकं B, द्विर्गैकD, द्विर्गेकं ANP. २ यथा ।ऽऽ एवं लगेषु CN, यथा ऽऽ। एवं लगेषु A, यथा ।ऽ। एवं लगेषु D ३ द्विगुणयेत् B. ४ तत्पूर्वगुरो BP. ५ कृत dropped in A ६ हत्पङ्क C ७ कृतः dropped in CD. ८ द्विगं पञ्चममिति A. ९ अन्तेन ALCDHP. १० अन्तेन ADGH. ११ अधस्तान् N. १२ निर्दिशेत् D. १३ एकमङ्कमन्ते निधाय A; एकमधो निधाय D. १४ तृतीये स्थाने B १५ द्वितीये स्थाने D.

